कविहृदयम्–

# प्रवर्तनात् पूर्वं चिन्तनीयम्

**कः कालः कानि मित्राणि को देशः कौ व्ययागमौ।**
**कश्चाहं का च मे शक्तिः इति चिन्त्यं मुहुर्मुहुः॥**

**– चाणक्यः**

चाणक्यः नीतिनिपुणः निरूपणनिपुणः अपि। सः अस्मान् उपदिशति – "कालः, देशः, पात्रं, लाभः, हानिः, स्वस्वरूपज्ञानं, सामर्थ्यम् इत्येते अंशाः कार्यप्रवर्तनात् पूर्वं मनसि स्थापनीयाः। एतेषु अंशेषु सम्यक् विविच्य अग्रिमं पदं स्थापनीयम्" इति।

किं वयं व्यवहारसन्दर्भे एतेषु अंशेषु जागरूकाः भवामः? प्रायः न। अतः एव कार्यसिद्धौ क्लेशम् अनुभवामः। कदाचित् अस्माकं कार्यारम्भः असमये भवति। पुनः कदाचित् फलप्राप्तेः किञ्चित्पूर्वं विरतिः दृश्यते। अपात्रे विश्वासः, विश्वासयोग्ये उदासीनता च प्रायः सर्वेषां स्वभावः। पात्रापात्रनिर्णये प्रमादः एव बहुधा दृश्यते। अस्थाने प्रवर्तनात् स्थाने च अप्रवर्तनात्, अस्मासु अधिकांशाः जनाः सामान्यात् स्तरात् ऊर्ध्वं न गताः। लाभः हानिः च दैवाधीनम् इति अस्माकं धारणा। तदुभयम् अपि पुरुषप्रयत्नसाध्यम् इत्यत्र इतोऽपि सन्देहः अस्माकम्। स्वस्वरूपज्ञानं मोक्षं प्राप्तुम् इच्छतां विषयः, न अस्मदादीनाम् इति भावयन्तः वयं गजनिमीलिकया तिष्ठामः। स्वसामर्थ्यविषये केषाञ्चित् अतुलविश्वासः, अन्येषां केषाञ्चित् सर्वथा अविश्वासः।

श्लोके ये षड् अंशाः उक्ताः ते सम्यक् विमृष्टाः चेत्, तदनुगुणं व्यवहृतं चेत् इष्टप्राप्तिः सुनिश्चिता। मार्गारब्धाः सर्वे यत्नाः नूनं फलन्ति।

श्लोके प्रस्तुतस्य विषयस्य प्रत्युदाहरणभूताः तु बहुधा दृश्यन्ते लोके। किन्तु उदाहरणभूताः? न अस्माभिः दृष्टाः अद्यावधि। उदाहरणभूतः कोऽपि कुत्रापि दृष्टः स्यात् भवद्भिः, तर्हि भवन्तः खलु भाग्यशालिनः!

जिज्ञासा –

# आत्मशब्दस्य प्रयोगः

शिष्यः- श्रीमन्! 'सः तस्य दोषं ज्ञातवान्' इति वाक्यं शुद्धम्, उत 'सः आत्मनः दोषं ज्ञातवान्' इत्येतत्?

आचार्यः- भवान् एव विमृशतु। तच्छब्दस्य कः अर्थः?

शि - तच्छब्दः दूरस्थां व्यक्तिं बोधयति।

आ - एतत् तु स्पष्टं खलु? इदानीं वदतु– दोषः तस्यां व्यक्तौ एव भवति, उत ततः दूरे।

शि - तस्याम् एव व्यक्तौ भवति।

आ - एवं तर्हि 'सः तस्य दोषं ज्ञातवान्' इति वाक्यं कथं शुद्धं स्यात्? रामः इति कश्चित्। सः कृष्णनामकस्य दोषं जानाति। तृतीयः गोविन्दः वदति– "सः (रामः) तस्य (कृष्णस्य) दोषं ज्ञातवान्" इति। अत्र तु वाक्ये न कोऽपि दोषः। किन्तु 'रामे दोषाः सन्ति, रामः एव ज्ञाता' इत्ययं सन्दर्भः गोविन्देन उच्यते चेत्– "सः (रामः) आत्मनः (स्वस्य) दोषान् ज्ञातवान्" इत्येव वक्तव्यम्।

शि - श्रीमन्! कर्तृपदं स्त्रीवाचकं चेत् कथं प्रयोगः?

आ - कर्तृपदं स्त्रीवाचकं चेदपि प्रयोगः एवम् एव।

शि - तन्नाम 'सा आत्मनः दोषां ज्ञातवती इति' प्रयोक्तव्यम् इति।

आ - अथ किम्? प्रयोगः तथैव। भवतः सन्देहः एव मास्तु।

शि - किं श्रीमन्! 'सा' इति स्त्रीलिङ्गं पदम्। 'आत्मा' इति पुल्लिङ्गं पदम्।

आ - अलम् अलम्। ज्ञातः भवतः सन्देहः। एतद्विषये पूर्वं मया उक्तम् इति स्मरामि। 'यल्लिङ्गं यद्वचनम् .....' इति नियमः विशेष्यनिघ्नानां (विशेषणानां) विषये अन्वेति, न तु नियतलिङ्गानां विषये। आत्मशब्दः नित्यपुल्लिङ्गः। अतः कर्तृपदं यस्मिन् कस्मिन् वा लिङ्गे भवतु, आत्मशब्दस्तु पुल्लिङ्गे एव भवति।

शि - 'अहं मम दोषं ज्ञातवान्' 'अहम् आत्मनः (स्वस्य) दोषं ज्ञातवान्' इत्यनयोः कतरत् वाक्यं शुद्धम्?

आ - उभयम् अपि शुद्धम् एव। पूर्वोक्ते भवतः उदाहरणे तच्छब्दः दूरस्थं निर्दिशति स्म। अत्र तु अस्मच्छब्दः (मम) आत्मशब्दः च समानां व्यक्तिं बोधयतः। अतः 'अहं मम दोषं ज्ञातवान्' इति, 'अहम् आत्मनः दोषं ज्ञातवान्' इति वा वक्तुं शक्यते।

शि - श्रीमन्! 'ते आत्मनां दोषं ज्ञातवन्तः' इति प्रयोगः उचितः, उत 'ते आत्मनः दोषं ज्ञातवन्तः' इति?

आ - 'ते आत्मनः दोषं ज्ञातवन्तः' इति प्रयोगः एव उचितः।

शि - कर्तृपदं बहुवचने अस्ति। अतः आत्मशब्दस्य अपि बहुवचनम् एव युक्तं खलु?

आ - तथा न। एतादृशे सन्दर्भे एकवचनेन प्रयोगः एव शिष्टानां व्यवहारः। तदनुगुणं खलु अस्माभिः व्यवहरणीयम्? अतः अस्मिन् अर्थे आत्मशब्दः सर्वदा एकवचनेन एव प्रयोक्तव्यः।

शि - पाणिनिसूत्रानुग्रहः, भाष्यकारवचनं वा एतद्विषये किमपि अस्ति वा?

आ - अस्ति वा न वा इति अहं तु स्पष्टं न जानामि। प्रमाणत्वेन परिगण्यमानाः प्रसिद्धाः वैयाकरणाः चारुदेवशास्त्रिणः एतद्विषये एवं वदन्ति*—

"आत्मशब्दप्रयोगः अपि एकत्वे एव दृश्यते, बहुत्वेऽपि व्यक्तीनाम्। तद्यथा भारते प्रयोगः— मन्यन्ते सन्तमात्मानम् असन्तमपि विश्रुतम्। (प्रजागरपर्वणि ३४/४५) बहुधा च प्रयुञ्ज्महे — अज्ञाः आत्मानं कृतिनं मन्यन्ते इति। एकः आत्मा इति पक्षे एकवचनम् उपपन्नम् एव। नानात्मानः इति नैयायिकादीनां पक्षे अपि एकवचनं न अयुक्तम्। प्रत्येकं वाक्यपरिसमाप्तेः। अज्ञाः प्रत्येकम् आत्मानं कृतिनं मन्यन्ते इत्यर्थात्।"

शि - आत्मशब्दस्थाने स्वशब्दस्य प्रयोगः क्रियते खलु? तस्यापि एकवचनेन एव प्रयोगः वा?

आ - आम्। 'ते स्वस्य दोषं ज्ञातवन्तः' इत्येव प्रयोगः। पूर्वप्रस्तुताः चारुदेवशास्त्रिणः एतद्विषये वदन्ति— 'अत्र स्वेषाम् इति वदन् बाढं भवत्यपशब्दभाक्' इति।

---

* वाग्व्यवहारादर्शः



# चन्दमामा

एप्रिल्-१९८९

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. ३-००

वार्षिकं ग्राहकशुल्कं रू. ३६-००




# चन्दमामा

संस्थापकः– 'चक्रपाणिः' सञ्चालकः– 'नागिरेड्डी'

शिशुः कदाचित् गच्छन् क्रीडन् वा पतति। पतनसमनन्तरम् एव सः परितः दृष्टिं प्रसारयति। कोऽपि न दृष्टः चेत् उत्थाय क्रीडने मग्नः भवति। 'केनापि अहं दृष्टः' इति भावना आगता चेत् उच्चैः रोदनम् आरभते। यतः पतितं तं यदा अन्यः पश्यति तदा तस्य शिशोः स्वाभिमानस्य आघातः भवति।

संस्कृतसम्भषणविषये अपि एतदेव तत्त्वम् अन्वेति। बहवः संस्कृतं जानन्तः अपि सम्भाषणे प्रवृत्ताः न भवन्ति यत् तत्र अभिमानभङ्गस्य भीतिः एव कारणम्। तर्हि सम्भाषणप्रवृत्तेः उत्तेजनार्थं किं करणीयम्? अत्र एकः एव परिहारो नाम तदनुकूलस्य वातावरणस्य निर्माणम्। स्खलनम् अपि सहजम् इति भावना सर्वत्र स्यात्। यथा पतन्तं शिशुं दृष्ट्वा माता प्रीत्या उत्तेजयति तथैव प्रीत्या उत्तेजकाः सहृदयाः अपेक्षिताः।

'गच्छतः स्खलनं सम्भवति एव' इति वचनं सत्यं चेत्, 'आरम्भस्तरे सम्भाषणे दोषाः भवन्ति एव' इत्येषः शिक्षासिद्धान्तः प्रयोगप्रमाणितः चेत् दोषं कुर्वन्तं दृष्ट्वा इतरैः सन्तोषः अनुभोक्तव्यः। दोषं कुर्वतः मनसि अभिमानभङ्गस्य आशङ्का अपि यथा न उत्पद्येत तथा व्यवहारः करणीयः। एतदुचितः संस्कारः अस्माकं मनसः स्यात्।

सम्पुटः–६ एप्रिल्–१९८९ सञ्चिका–१

प्रतिकृतिमूल्यं रू. ३-०० * वार्षिकं ग्राहकशुल्कं रू. ३६-००

रसप्रश्नाः–

# रामप्रयाणं, रावणमन्त्रणं च

(सागरोल्लङ्घनार्थं कृतनिश्चयं रामं हनूमान् लङ्कायाः स्वरूपं बोधयति। ततः कपिसेना किष्किन्धातः निर्गत्य सागरतीरं प्राप्नोति। लङ्कायां च रावणः द्विवारं मन्त्रालोचनसभाम् आयोजयति। तत्र राक्षसप्रमुखाणाम् अभिप्रायं सङ्गृह्णाति। वाल्मीकिरामायणस्य एतं कथाभागम् आश्रित्य अधः केचन प्रश्नाः सज्जीकृताः सन्ति। युक्तम् उत्तरं जानन्तु।)

१. लङ्कायाः कति महाद्वाराणि सन्ति इति हनूमान् रामं वदति?
२. लङ्का कतिभिः दुर्गैः रक्ष्यमाणा अस्ति? तेषां दुर्गाणां नामानि कानि?
३. कस्मिन् मुहूर्ते रामः लङ्कां प्रति प्रयाणम् आरब्धवान्?
४. मार्गशोधनार्थं कः नियुक्तः आसीत्?
५. प्रयाणसमये हनूमतः स्कन्धे कः उपविष्टवान् आसीत्?
६. लक्ष्मणः कस्य स्कन्धम् अधिरूढवान् आसीत्?
७. 'अयोध्यायाम् अनर्थः घटितः, भरतेन प्रेषिताः वयम्। भवता प्रत्यागन्तव्यम् इति मानुषरूपेण गत्वा रामः वक्तव्यः' इति रावणं कः सूचितवान्?
८. सीतापहरणं युक्तम् इति उक्तं कुम्भकर्णेन, उत अयुक्तम् इति?
९. सीता बलात् वशीकरणीया इति केन सूचितम्?
१०. रावणेन पूर्वं का बलात्कृता आसीत्, येन 'अन्यदा बलात्कारे मरणम्' इति शापः तेन प्राप्तः?
११. स च शापः केन/कया दत्तः?

उत्तराणि–

१. चत्वारि। २. चतुर्भिः दुर्गैः। जलदुर्गं, गिरिदुर्गं, वनदुर्गं, कृत्रिमदुर्गं चेति। ३. अभिजिन्मुहूर्ते। ४. नलः। ५. सुग्रीवः, रामः च। ६. अङ्गदस्य। ७. वज्रदंष्ट्रः। ८. अयुक्तम् इति। ९. महापार्श्वेन। १०. पुञ्जिकस्थला नाम अप्सराः। ११. ब्रह्मदेवेन।

# र स वा र्ताः

## पुष्पकविमानम्



इटलीदेशीयः विज्ञानी डा. रोबर्टो पिनोटी अभिप्रैति यत् पुराणेषु वर्णितानि पुष्पकविमानानि केवलं काल्पनिकानि न, अपि तु वास्तविकानि इति। सद्यः एव बेङ्गलूरुनगरे प्रवृत्ते अन्ताराष्ट्रिय व्योम विज्ञान सम्मेलने भाषमाणः सः— 'अस्माकं प्राचीनग्रन्थानाम् अध्ययनेन पुष्पकविमानसम्बन्धि विज्ञानं सुस्पष्टं ज्ञायेत' इति उक्तवान्।

## गगनाङ्गणे प्रकाशवलयः

क्रि.श. २००० तमे वर्षे वयं आकाशे वलयाकारकं प्रकाशप्रसारं द्रक्ष्यामः। एषः प्रकाशवलयः नूतनस्य सहस्राब्दस्य प्रवेशसन्दर्भे एकतायाः, परिपूर्णतायाः, शान्तेः च सङ्केतरूपेण आविर्भाव्यते।





## कुजग्रहे मानवाः

क्रि.श. २००१-२०१० मध्यकाले अमेरिकादेशः मङ्गलग्रहं प्रति मानवान् प्रेषयिष्यति।

## अपूर्वा मेधासम्पत्तिः!

विश्वविख्यातेन गणितज्ञेन प्राध्यापकेन एर्नो रुबिक्महोदयेन निरूपिताः क्लिष्टतमाः गणितसमस्याः एकादशवर्षीयेण समीर मेह्तानामकेन, तस्य भगिन्या नववर्षीयया कानिकया च लीलया परिहृताः। एताः समस्याः सृष्टवता प्राध्यापकेन एतासां उत्तरम् अन्वेष्टुं महान् समयः स्वीकृतः। किन्तु एतादृशस्य गणितस्य उत्तरं समीरः २५ सेकेण्ड्-अभ्यन्तरे, कानिका च निमेषद्वये च उक्तवन्तौ।



# शुल्कदानम्

रामपुरस्य पार्श्वे एव विष्णुपुरम् अस्ति। किन्तु तौ भिन्नभिन्नराज्यीयौ ग्रामौ। ग्रामसीमायां राज्यद्वयस्य अपि अधिकारिणः वणिग्भ्यः शुल्कसङ्ग्रहणं कुर्वन्ति स्म।

प्रतिशकटं शुल्कं पञ्च रजतनाणकानि। एकस्य एव बहूनि शकटानि यदि भवेयुः तर्हि पञ्चके एकस्य शुल्कं न भवति। एवम् एव तदीयानि दश शकटानि सन्ति चेत् द्वयोः शुल्कं दातव्यं न भवति। अयं च घट्टकुट्याः नियमः।

कश्चन वणिक् पञ्चसु शकटेषु वस्तूनि आरोप्य विष्णुपुरतः रामपुरं प्रति प्रस्थितवान्। रामपुरस्य सीमायां शकटस्य गमनं स्थगितम्। घट्टकुट्यां शुल्कं दातुं शकटानि पङ्क्तिशः स्थितानि आसन्।

सः वणिक् स्वसहायकं चन्द्रकान्तम् उक्तवान्– "यदि अनुपङ्क्तौ तिष्ठामः तर्हि अस्माकं शुल्कदानं विलम्बेन भवेत्। अतः भवान् अग्रे गत्वा केनापि उपायेन शीघ्रं शुल्कं दातुं शक्येत वा इति ज्ञात्वा आगच्छतु" इति उक्त्वा विंशतिं रजतनाणकानि दत्तवान्।

चन्द्रकान्तः ततः गत्वा दशसु निमेषेषु प्रत्यागत्य विंशतिं रजतनाणकानि अपि प्रत्यर्पयन् उक्तवान्– "अस्माकं शुल्कदानकार्यं समाप्तम्" इति।

तदा वणिक् आश्चर्येण पृष्टवान्– "अस्माकं पञ्च शकटानि सन्ति। भवान् तु समग्रं प्रत्यर्पितवान्। एवं तर्हि किं तैः शुल्कं न स्वीकृतम्?" इति।

चन्द्रकान्तः हसन् उक्तवान्– "अस्माकं पुरतः ये वणिजः सन्ति तेषां सर्वेषाम् अपि एकैकम् एव शकटम् अस्ति। अहं तेषां समीपं गत्वा उक्तवान्– 'सर्वे मम हस्ते शुल्कधनं यच्छन्तु। युगपत् एव शुल्कदानेन शीघ्रम् एव इतः गन्तुं शक्यते' इति। सर्वे एतत् अङ्गीकृत्य मम हस्ते शुल्कधनं स्थापितवन्तः। अहम् अधिकारिणः समीपं गत्वा– 'सर्वाणि शकटानि अस्मदीयानि एव। आहत्य पञ्चविंशतिः सन्ति' इति उक्तवान्। सः एतत् अङ्गीकृत्य नियमानुसारं पञ्चानां शकटानां निमित्तं शुल्कं न स्वीकृतवान्। एवं धनं सञ्चितम् अभवत्" इति।

वणिक् स्वसहायकस्य चन्द्रकान्तस्य बुद्धिमत्तया सन्तुष्टः सन् तदीयं वेतनं वर्धितवान्।





# स्वप्नविषये भ्रमः

वत्सलदेशं चन्द्रसेनः नाम राजा पालयन् आसीत्। तस्य अन्धविश्वासः अधिकः। स्वप्ने यत् दृश्यते तत् यथार्थतया जीवने प्रचलिष्यति इति सः दृढं विश्वसिति स्म।

सः यद्यपि राजा, किन्तु राजयोग्याः गुणाः तस्य न आसन्। सिंहासनाधिकारः तु परम्परया प्राप्तम् आसीत्। अतः सः सिंहासनम् आरोढुं शक्तवान्, न तु स्वसामर्थ्यबलात्। शूरत्वं गुणग्राहिता च अपि तस्य न आसीत्। तदीयः मन्त्री सेनापतिश्च दक्षौ इत्यतः शासनव्यवहारः निरातङ्कं प्रचलति स्म।

कदाचित् राज्ञा कश्चन स्वप्नः दृष्टः। स्वप्ने सः दृष्टवान् यत् – तस्य निद्रासमये कश्चन कृष्णसर्पः शयनागारं प्राविशत्, राज्ञः समीपम् आगन्तुम् उद्युक्तः च, तदा रक्षकभटः कश्चित् द्वारताडनपूर्वकं राजानम् उत्थाप्य सर्पं मारितवान् इति।

अनन्तरदिने निद्रातः उत्थितः चन्द्रसेनः स्वप्नवृत्तान्तं मन्त्रिणं सेनापतिं च उक्तवान्। तत्समये नन्दो नाम रक्षकभटः अपि एतत् श्रुतवान्।

'स्वप्नविषये महाराजस्य यः विश्वासः अस्ति सः स्वलाभार्थम् उपयोक्तव्यः' इति बहुदिनेभ्यः चिन्तयन् आसीत् नन्दः। तदर्थम् एषः सुसमयः इति आलोचितवान् सः। तदर्थं काञ्चित् योजनाम् अपि कृतवान् सः।

केषाञ्चित् दिनानाम् अनन्तरं रात्रिसमये नन्दः अन्तःपुरस्य रक्षणं कुर्वन् लघुस्यूते पूरयित्वा आनीतं कृष्णसर्पं महाराजस्य शयनागारस्य अन्तः प्रेषितवान्। अनन्तरम् आतङ्कं भीतिं च प्रदर्शयन् त्वरया द्वारताडनं कृत्वा महाराजम् उत्थापितवान्।

द्वारम् उद्घाट्य राजा कोपेन पृष्टवान्–

"अनामिका"



"किं तत् महत्कार्यम् आपतितं, येन भवान् माम् उत्थापितवान्?" इति।

"महाप्रभो! क्षन्तव्यः अहम्। वातायन-द्वारा अन्तः गच्छन्तं कञ्चन कृष्णसर्पं दृष्टवान्। अतः भीतः सन् भवन्तम् उत्थापितवान्" इति वदन् नन्दः प्रकोष्ठं प्रविष्टवान्।

आश्चर्यं प्रकटयन् राजा इतरभटान् अपि आहूतवान्। अन्वेषणेन तैः भटैः प्रकोष्ठे कश्चन कृष्णसर्पः प्राप्तः। ते तं सर्पं मारितवन्तः। सन्तुष्टः राजा नन्दाय स्वकण्ठे स्थितम् अमूल्यं रत्नहारम् उपायनरूपेण दत्तवान्।

'नन्दः बुद्धिमत्तया राजानं वञ्चितवान्' इत्येतम् अंशं मन्त्री सेनापतिश्च ज्ञातवन्तौ एव। एतद्विषये महाराजः उक्तः चेत् किमपि प्रयोजनं नास्ति इति तौ जानीतः।

अतः तौ नन्दं स्वसमीपम् आहूय उक्तवन्तौ– "अये नन्द! विना वञ्चनां सत्यं वदतु। महाराजस्य शयनप्रकोष्ठस्य अन्तः कृष्णः सर्पः स्वयं न आगतः। स च भवता प्रवेशितः। सत्यं खलु?" इति।

नन्दः एतत् सर्वथा निराकृतवान्। अपराधिनः मुखात् केन उपायेन सत्यं वाचनीयम् इति जानता सेनापतिना यदा कशाप्रहारः दत्तः तदा नन्दः अपराधम् अङ्गीकृतवान्।

"कीदृशी दुर्बुद्धिः भवतः? पारितोषिकस्य आशया अकार्यं कुर्वन् भवान् महाराजम् अधः पातयति खलु? राजोद्योगिनः भवतः एषः व्यवहारः उचितः वा? इतःपरम् एतादृशं व्यवहारं करोति चेत् कठोरं दण्डनम् अनुभविष्यति भवान्। जागरूकः भवतु" इति उपदिश्य नन्दं प्रेषितवान् मन्त्री।

सेनापतिः कशया प्रहारं दत्तवान् इत्यतः नन्द कुपितः। समयं संसाध्य केनापि उपायेन प्रतीकारः साधनीयः इति चिन्तयति सः।

एतदनन्तरं महाराजेन अपरः स्वप्नः दृष्टः। श्मशाने मन्त्रवादिद्वारा राज्ञः मारणार्थं पूजां कारयन्तं कञ्चित् स्वप्ने दृष्टवान् राजा। तथा पूजाकारयिता कः इति तेन सम्यक् न ज्ञातम्। तदीयानां वेषभूषादीनां



दर्शनात् एतावत् तु ज्ञातं यत् सः कश्चित् राजोद्योगी इति।

अनन्तरदिने राजा स्वप्नवृत्तान्तं मन्त्रिणं सेनापतिं च निवेद्य उक्तवान्– ''मया स्वप्ने यत् दृश्यते तत् वस्तुतः अपि जीवने भवति इति तु सद्यः एव ज्ञातम्। अतः मम मारणार्थं कश्चित् प्रयतमानः अस्ति इत्यत्र सन्देहः एव नास्ति। तादृशः कः इति अचिरात् एव अन्विष्य कठोरं दण्डनीयः सः'' इति।

तत्समये अन्तःपुररक्षणकार्ये निरतः नन्दः तत्रैव आसीत्। सः एतत्सर्वं श्रुतवान्। प्रतीकारसाधनार्थम् एषः सदवकाशः इति चिन्तितवान् सः।

केषाञ्चित् दिनानाम् अनन्तरं नन्दः– 'मम महिषी न दृश्यते। तस्याः अन्वेषणार्थं मम एकदिनस्य विरामः अपेक्षितः' इति उक्त्वा विरामं स्वीकृतवान्। तद्दिने मार्तण्डकुमारनामकस्य मान्त्रिकस्य समीपं गत्वा तस्य साहाय्येन श्मशाने एकत्र वर्णत्रययुतां रङ्गवल्लीं लिखितवान्। रङ्गवल्ल्याः मध्ये कपालम् अस्थीनि च स्थापयित्वा तदुपरि हरिद्रां कुङ्कुमं कुक्कुटरक्तं च पातितवान्। पार्श्वे एव विकृतां मृण्मूर्तिं चापि स्थापितवान्।

एतदनन्तरं सः महाराजसमीपं गत्वा निवेदितवान्– ''महाप्रभो! कुत्रापि गतायाः मम महिष्याः अन्वेषणार्थं गतः अहं श्मशाने मान्त्रिकद्वारा महतीं पूजां कारयन्तं सेनापतिं दृष्टवान्। सः मान्त्रिकः पूजासमये तदा तदा भवतः नाम उच्चारयति स्म। मृण्मूर्तौ आणियोजनम् अपि दृष्टं मया। आगच्छन्तं मां दूरात् एव दृष्ट्वा सर्वे पलायितवन्तः। मत्कारणतः पूजा अर्धे स्थगिता इति, पुनः कदाचित् पूजा अनुवर्तनीया इति च ते निलीय स्थिताः परस्परवार्तालापं कुर्वन्ति स्म'' इति।

राजा एकाकी श्मशानं गतवान्। पूजाचिह्नानि तत्र स्फुटं दृश्यन्ते स्म। 'नन्दस्य वचनं सत्यम्' इति आलोचितवान् राजा। सेनापतिविषये क्रुद्धः सः तत्क्षणे एव तं कारागारे स्थापितवान्। नन्दं बहुधा श्लाघमानः पारितोषिकेण सत्कृतवान् च।

मन्त्री नन्दं स्वसमीपम् आहूय उक्तवान्– ''भवान् राज्ञः अन्धविश्वासस्य दुरुपयोगं



स्वकीर्वन् स्वार्थं सम्पादयन् प्रतीकारं च साधयन् सेनापतिं कारागृहं प्रेषितवान्। एतत् सर्वथा अनुचितम्। वञ्चना तात्कालिकतया अभीष्टं पूरयति चेदपि कालान्तरे आत्मघातं करिष्यति एव। अतः इदानीम् एव विवेकं प्राप्य राज्ञः पुरतः वस्तुस्थितिं निवेद्य सेनापतिं बन्धविमुक्तं करोतु। तथा करोति चेत् भवतः दण्डनं यथा न भवेत् तथा व्यवस्थाम् अहं करोमि। अस्तु वा?'' इति।

तदा नन्दः मन्दहासं प्रकटयन्— ''महाराजः इदानीं मदधीनः अस्ति। कस्यापि स्वप्नस्य व्याजेन अहं भवन्तम् अपि कारागारं प्रेषयितुं शक्नोमि। अतः मया कथं व्यवहरणीयम् इति विषये भवान् मा चिन्तयतु। एतत् एव क्षेमकरं भवतः'' इति उक्त्वा झटिति ततः निर्गतवान्।

केषाञ्चित् दिनानाम् अनन्तरं महाराजेन अपरः स्वप्नः दृष्टः। तत्र तेन दृष्टं यत् नन्दः शत्रुराजस्य पक्षम् आश्रित्य देशद्रोहं कुर्वन् राज्ञः स्वस्य हननार्थं खड्गम् उन्नीय आगच्छन् अस्ति इति। एतावता तेन जागरणं प्राप्तम्। भीतः सः तत्क्षणे एव भटान् आदिष्टवान् यत् नन्दः कारागारे स्थापनीयः इति।

अन्तःपुरे रक्षणकार्ये निरतः नन्दः राजाज्ञां श्रुतवान्। सः ततः पलाय्य उषःकाले मन्त्रिणः गृहं गत्वा तं साष्टाङ्गं नमस्कृत्य— ''श्रीमन्! भवता रक्षणीयः अहम्। भवतः हितवचनं धिक्कृत्य व्यवहरन् अहं स्वयम् आपदं स्वागतीकृतवान्। इदानीं भवान् एव शरणं मम'' इति सगद्गदं प्रार्थितवान्।

मन्त्री क्षणकालम् आलोच्य— ''इदानीं विवेकः प्राप्तः खलु भवता? अस्तु तावत्। अभयं दास्यामि, भीतिः मास्तु। मम गृहे निलीय तिष्ठतु भवान्। अग्रे किं करणीयम् इति अहं चिन्तयामि'' इति उक्त्वा नन्दं स्वगृहे रहसि स्थापितवान्।

द्वित्राणि दिनानि अतीतानि। नन्दस्य काऽपि वार्ता न ज्ञाता महाराजेन। सः प्रतिदिनम् अपि स्वप्ने पश्यति यत् नन्दः मारयितुम् आगच्छन् अस्ति इति। भीतः सः शयनात् उत्थाय उपविशति। पुनः निद्रां न प्राप्नोति। अतः सः मन्त्रिणम् आहूय

उक्तवान्– "केनापि उपायेन नन्दः ग्रहीतव्यः एव। अद्यावधि मया स्वप्ने दृष्टं सत्यं जातम्। सः मां मारयिष्यति इत्यत्र सन्देहः एव नास्ति" इति।

मन्त्री विविधैः वचनैः महाराजं सान्त्वयित्वा ततः गतवान्। अनन्तरं दिनत्रयानन्तरं पुनः महाराजं दृष्ट्वा उक्तवान्– "महाराज! नन्दः स्वग्रामे दिनद्वयात् पूर्वं सर्पेण दष्टः प्राणान् त्यक्तवान् इति श्रूयते। अद्य भटाः तत् प्रमाणीकृत्य निवेदितवन्तः" इति।

नन्दस्य मरणवार्ताश्रवणेन राज्ञः चित्रसेनस्य चिन्ताभारः अपगतः। अतः तद्दिनतः सः स्वप्ने नन्दं न दृष्टवान्।

सप्ताहानन्तरं मन्त्री राजानं दृष्ट्वा पृष्टवान्– "महाराज! नन्दः इतोऽपि स्वप्ने दृश्यते वा भवता?" इति।

राजा हसन् उक्तवान्– "मृतः कथं वा स्वप्ने आगच्छेत्?" इति।

"प्रभो! तथा न। नन्दः न मृतः। सः जीवति। वस्तुतः अपि स्वप्नः भ्रमः इति प्रमाणीकर्तुम् अहं नन्दं मम गृहे रहसि रक्षितवान्। सः जीवति इति भवान् यावत् जानाति स्म तावत् सः स्वप्ने आगच्छति स्म। तस्य मरणस्य श्रवणस्य अनन्तरं तु सः न आगतः स्वप्ने। किन्तु सः इतोऽपि जीवति एव। अतः स्वप्नः भ्रमः इति तु निश्चितम्। काकतालीयन्यायेन कदाचित् स्वप्ने दृष्टं यथार्थतया सम्भवति। किन्तु सर्वे स्वप्नाः यथार्थाः न भवन्ति" इति उक्तवान् मन्त्री।

"एवं तर्हि मया पूर्वं दृष्टं स्वप्नद्वयं यथार्थं कथं जातम्?" इति पृष्टवान् राजा।

"तदा सन्दर्भद्वये अपि पारितोषिकस्य लोभेन नन्दः भवन्तं वञ्चितवान्" इति उक्त्वा मन्त्री नन्दं तत्र आनायितवान्।

नन्दः राज्ञः पादयोः पतन् रोदनं कुर्वन् अपराधम् अङ्गीकृत्य क्षमां प्रार्थितवान्।

वस्तुस्थितिं जानन् राजा सेनापतिं बन्धविमुक्तं कृतवान्। तद्दिनतः महाराजस्य स्वप्नविषयकः भ्रमः अपगतः।





# मृत्युपत्ररहस्यम्

धर्मराजः नाम कश्चित् धनिकः पूर्वम् आसीत्। सा व्यवहारेण अपि धर्मराजः एव आसीत्। किन्तु तस्य सन्तानं न आसीत्। सन्तानप्राप्त्यर्थं धर्मराजेन पूजाः, व्रतादिकं च बहुधा कृतम्। किन्तु एतेन किमपि प्रयोजनं न सिद्धम्। एवं स्थिते कदाचित् धर्मराजस्य पत्नी अकस्मात् व्याधिग्रस्ता जाता, तेनैव कारणेन दिवङ्गता च। एतदनन्तरं धर्मराजः बहुकालं न जीवितवान्। पत्न्याः वियोगचिन्तया एव सः अपि स्वर्गं गतवान्।

धर्मराजस्य आत्मीयः सेवकः शिवः। तदीयः उद्यानपालकः च परमेशः। परमेशे शिवे च धर्मराजस्य विशेषविश्वासः आसीत्। धर्मराजस्य मरणात् तौ दिग्भ्रान्तौ अनाथौ च जातौ।

पार्श्वग्रामे निवसन् न्यायाधिकारी पुण्डरीकाक्षः धमराजस्य आत्मीयः आसीत्। सः कदाचित् आगत्य शिवं परमेशं च उक्तवान्— "भवतोः यजमानः स्वमरणात् पूर्वं परिस्थितिं समग्रतया निवेद्य मद्द्वारा मृत्युपत्रं लेखितवान्। तदनुगुणम् एतत् गृहम् अनाथालयः भविष्यति। भवन्तौ च दशसहस्रं रूप्यकाणि प्राप्नुतः" इति।

"श्रीमन्! अवशिष्टा सम्पत्तिः किं क्रियते?" इति पृष्टवान् परमेशः।

"धर्मराजः धनिकः आसीत्, सत्यम्। किन्तु तेन अपरिमितं दानं कृतम्। तदर्थं तेन गुप्तरूपेण भूमिः विक्रीता। अतः इतोऽप्यधिकं तदीयं किमपि न अवशिष्टम्" इति उक्तवान् पुण्डरीकाक्षः।

तद्दिने रात्रौ परमेशः पुण्डरीकाक्षस्य गृहम् गत्वा उक्तवान्— "श्रीमन्! भवता अद्य प्रातः यत् उक्तं तत्र मम विश्वासः न जातः। धर्मराजवर्यः अधिकतया दानं कृतवान्,

सत्यम्। तथापि तदीया भूमिः महापरिमाणेन आसीत् एव। एवं स्थिते 'तस्य मरणसमये केवलं विंशतिसहस्रं रूप्यकाणि आसन्' इति वचनं न विश्वासार्हम्'' इति।

किं वक्तव्यम् इति स्पष्टम् अजानन् पुण्डरीकाक्षः इतस्ततः दृष्टवान्। तदा परमेशः अग्रे गत्वा तस्य हस्ते सहस्रं रूप्यकाणि स्थापयित्वा उक्तवान्– ''भवता मह्यं दशसहस्रं रूप्यकाणि दत्तानि। कृतज्ञतारूपेण एतावत् भवते यच्छन् अस्मि। भवता धर्मराजवर्यस्य मृत्युपत्रविषये सर्वं वक्तव्यम् इति मम प्रार्थना'' इति।



पुण्डरीकाक्षः मन्दहासपूर्वकम् उक्तवान्– ''भवान् तु बुद्धिमान्। मृत्युपत्रविषये किमपि गोपितम् इति बुद्धिमत्तया ज्ञातवान् एव भवान्। वस्तुस्थितिः तु एषा – धर्मराजस्य इतोऽपि लक्षरूप्यकाणि सन्ति इति तु सत्यम् एव। किन्तु धर्मराजः भवते शिवाय च दशसहस्रं रूप्यकाणि दातव्यानि इति मृत्युपत्रे सूचयन् काञ्चित् परीक्षाम् आयोजितवान् अस्ति। तत् धनं भवद्भ्यां कथम् उपयुज्यते इति परीक्षणीयम् इति सः माम् आदिष्टवान् अस्ति। तस्य आत्मा तृप्तः यथा भवेत् तथा यः आचरति तस्मै लक्षरूप्यकाणि दातव्यानि इति तस्य अपेक्षा। एतत्सर्वं सः मृत्युपत्रे उल्लिखितवान् अस्ति। एतत्सर्वं वस्तुतः परीक्षातः पूर्वं मया न वक्तव्यम् आसीत्। तथापि भवति विशेषप्रीतिः अस्ति इत्यतः मया उक्तम्'' इति।

एतत् श्रुत्वा परमेशः नितरां सन्तुष्टः। सः ततः गृहं गतवान्। तदनन्तरं शिल्पिनां द्वारा धर्मराजस्य प्रतिमाः निर्माय चतुष्पथेषु प्रतिष्ठापितवान्। धर्मराजस्य दानशीलतां, दयापरतां, वात्सल्यं च अधिकृत्य तेन गीतानि लेखितानि। हरिकथाद्वारा तदीयं जीवनचरित्रं सर्वत्र प्रसारितवान् सः।

मुग्धः शिवस्तुः धर्मराजस्य मृत्युपत्रविषये किमपि न जानाति। सः आत्मना प्राप्तं धनं दीनदरिद्रेषु वितरति। उपकृतः कश्चित् प्रशंसां करोति चेत् एषः वदति– ''किमिति मम प्रशंसां करोति भवान्? एतत् धनं मम न। मम यजमानेन दत्तम् एतत्। सत्पात्रे दानं मम

कर्तव्यम्। यदि प्रशंसां कर्तुम् एव इच्छति तर्हि स्वर्गस्थस्य मम यजमानस्य प्रशंसां करोतु'' इति।

एवम् एव कानिचन दिनानि अतीतानि। कदाचित् पुण्डरीकाक्षः धर्मराजग्रामम् आगत्य ग्रामीणान् सर्वान् मेलयित्वा तेषां सम्मुखे मृत्युपत्रम् आद्यन्तं पठित्वा– ''इदानीं भवन्तः एव वदन्तु – एतानि लक्षरूप्यकाणि शिवाय दातव्यानि, उत परमेशाय इति। भवताम् अभिप्रायः कः?'' इति पृष्टवान्।

तत्र उपस्थिताः सर्वे एककण्ठेन उक्तवन्तः– ''शिवः एव तत् प्राप्नुयात्'' इति। तन्मध्ये कश्चित् मध्यवयस्कः उत्थाय उक्तवान्– ''शिवाय एव तानि रूप्यकाणि दातव्यानि इत्यत्र कारणं वदामि – शिवः दीनदरिद्रेभ्यः विकलाङ्गेभ्यः च धर्मराजेन दत्तं धनं यच्छन् अस्ति। धर्मराजस्य आत्मा एतेन कार्येण एव तृप्तः भवेत्, न तु अन्येन केनचित् कार्येण। अतः शिवः एव धनदानस्य योग्यं पात्रम्'' इति।

पुण्डरीकाक्षः लक्षरूप्यकाणि शिवाय दत्तवान्। अनन्तरं परमेशं पश्यन् उक्तवान्– ''मृत्युपत्रस्य पूर्णं विवरणं ज्ञातुम् इच्छन् भवान् न्यायाधिकारिणे मह्यम् एव उत्कोचरूपेण सहस्रं रूप्यकाणि दत्तवान्। तत् धनम् इदानीं प्रतिस्वीकरोतु। भवतोः स्वभावपरीक्षणं मम कार्यम् आसीत् इत्यतः तद्दिने भवता दत्तं धनं स्वीकृतवान् अहम्'' इति।

लज्जया शिरः अवनमय्य स्थिताय परमेशाय दशसहस्रं रूप्यकाणि यच्छन् शिवः उक्तवान्– ''चिन्तां मा करोतु परमेश! यजमानेन दत्तं धनं स्वमत्यनुगुणं व्ययीकृतवान् भवान्। तदपि यजमानस्य प्रसिद्धिं वर्धयितुम्। इदानीम् एतावत् धनं भवतः समीपे भवतु नाम'' इति।

अनन्तरं शिवः धर्मराजनाम्ना धर्मशालां निर्माय दीनदरिद्राणां सेवां कुर्वन् तृप्त्या जीवनं यापितवान्।





# पञ्च प्रश्नाः

[३]

अनन्तरदिने धीरसिंहः तृतीयं प्रश्नं ज्ञातुम् इच्छन् सुलोचनायाः समीपं गतवान्। सुलोचना तं सहार्दं स्वागतीकृत्य उक्तवती—"इतः दक्षिणदिशि प्रत्यमावास्यं मध्यरात्रसमये कश्चन आर्तस्वरः श्रूयते—'हा हन्त! सत्कार्यं किमपि कर्तुम् अशक्नुवतः मम एषा अमावास्या अपि अतिक्रामति खलु?' इति। कस्य आर्तस्वरः एषः? किमर्थं च श्रूयते? इति अंशद्वयं ज्ञात्वा आगत्य वक्तव्यम्। एषः एव मम तृतीयः प्रश्नः" इति।

धीरसिंहः क्षणकालम् आलोच्य मासत्रयस्य अवधिं स्वीकृत्य दक्षिणदिशम् अनुसृतवान्।

निरन्तरं गच्छन् दिनत्रयं यावत् अहोरात्रं प्रयाणं कृतवान्। चतुर्थे दिने घोरम् अरण्यम् उपस्थितम्। अश्वप्रयाणं तत्र सर्वथा असाध्यम् आसीत्। अतः सः अश्वम् अरण्यसमीपस्थे शाद्वले परित्यज्य पादेन गच्छन् हस्तेन लताकण्टकादिकम् अपसारयन् प्रयाणम् अनुवर्तितवान्। एवं दिनत्रयं यावत् गमनेन अरण्यम् अतिक्रान्तम् अभवत्।

ततः सुदूरे किञ्चन नगरं दृष्टं तेन। तस्य दर्शनेन प्रयाणायासः सर्वथा परिहृतः इव। सः उत्साहेन पदानि स्थापयन् नगरम् उद्दिश्य



गतवान्।

नगरस्य प्रवेशद्वारस्य समीपे एव विचित्रवेषधारिणौ रक्षकभटौ तस्य समीपं वेगेन आगतवन्तौ। नामकुलादिकम् आगमनकारणादिकं वा किमपि अपृष्ट्वा तस्य बन्धनार्थम् उद्युक्तौ जातौ।

"किम् एतत्? मया कः अपराधः कृतः? किमर्थं मां बद्धुम् उद्युक्तौ भवन्तौ?" इति आश्चर्येण पृष्टवान् धीरसिंहः।

किन्तु राजभटौ उत्तरं किमपि अनुक्त्वा तं बद्ध्वा महाराजसमीपं नीतवन्तौ। अग्रे प्रवर्तिष्यमाणस्य विषये कुतूहली धीरसिंहः विशेषतः विरोधं किमपि न प्रकटितवान्।

भटैः बद्ध्वा आनीतं धीरसिंहं पृष्टवान् राजा– "कः भवान्? कः देशः भवतः? अस्माकं नगरं किमर्थं प्रविष्टवान्?" इति।

"अहं नेपालदेशस्य राजकुमारः। धीरसिंहः इति मम नाम। प्रमुखस्य कस्यचित् राजकार्यस्य निमित्तं भवन्नगरम् अतिक्रम्य मया गन्तव्यम् अस्ति। निरपराधिनं मां भवदीयौ भटौ विना कारणं बद्ध्वा अत्र आनीतवन्तौ। अनुचितम् एतत्" इति उक्तवान् धीरसिंहः।

तदा राज्ञः पार्श्वे उपविष्टः मन्त्री उक्तवान्– "धीरसिंह! अन्यदेशीयः कश्चित् अस्माकं नगरं प्रविशति चेत् अस्माकं राजकुमारी सीमन्तिनी तं त्रीन् प्रश्नान् पृच्छति। युक्तम् उत्तरं वक्तुं यः न शक्नोति सः मरणदण्डनं प्राप्नोति। उत्तरं वक्तुं समर्थं त्यजामः वयम्। किमपि अनुक्त्वा अन्यदेशीयः बद्ध्वा आनेतव्यः इत्येव राजाज्ञा। एतस्य नगरस्य नाम शिरच्छेदनगरम् इति" इति।

"कीदृशम् अनौचित्यम् एतत्! निरपराधिनः अन्यदेशीयस्य एवं दण्डनम् अन्याय्यम् एव। वस्तुतः अन्याय्यस्य निरोद्धा भवति राजा। अत्र तु राजा एव अन्याय्यम् आचरति! अहो! मृगस्य इव व्यवहारः एषः!" इति उद्गारं प्रकटितवान् धीरसिंहः।

"भवतः वचनं सत्यम्। वयम् अपि एतत् जानीमः। किन्तु वयम् असहायाः अत्र। दुष्टस्य कस्यचित् यक्षस्य शापात् ग्रस्ता अस्ति अस्माकं राजकुमारी। यक्षम् अनुसर्तुम्



अस्माकं राजकुमारी सिद्धा न जाता इत्यतः सः – 'भवद्द्वारा प्रश्नान् प्रच्छयामि। उत्तरम् वक्तुम् असमर्थं मारयिष्यामि। एवम् भवत्याः देशस्य अपकीर्तिं जनयिष्यामि' इति उक्त्वा तथैव कुर्वन् अस्ति। अतः एतादृशः अपवादः सोढव्यः आपतितः। भवान् तां पश्यतु तावत्" इति उक्त्वा राजा धीरसिंहं सीमन्तिनीसमीपं नीतवान्।

राजकुमारी सीमन्तिनी धीरसिंहं दृष्ट्वा पितरं पृष्टवती– "कः एषः? मम प्रश्नानां योग्यम् उत्तरं दातुं समर्थः आगतः वा?" इति।

"तादृशः एव एषः इति भावयाम। प्रश्नान् क्रमशः पृच्छतु तावत्" इति उक्तवान् राजा।

"मयि शङ्का मास्तु। निस्सङ्कोचं प्रश्नं पृच्छतु" इति सीमन्तिनीम् उक्तवान् धीरसिंहः।

"फलेषु अतिश्रेष्ठं मधुरतमं फलं किम्?" इति पृष्टवती सीमन्तिनी।

"सन्तानफलम्" इति झटिति उत्तरं दत्तवान् धीरसिंहः।

"केनापि न इष्यमाणम्, अनिवार्यतया अनुभोक्तव्यं च किम्?" इति सीमन्तिनी द्वितीयं प्रश्नं पृष्टवती।

धीरसिंहः क्षणकालम् आलोच्य उक्तवान्– "मरणम्" इति।

"भोः, मम तृतीयं प्रश्नं शृणोतु। यत् अस्ति चेत् सर्वम् अपि अस्ति इव, यत् नास्ति चेत् विद्यमानम् अपि अप्रयोजकम् इव भवति, तत् किम्?" इति पृष्टवती सीमन्तिनी।

"बुद्धिबलम्" इति उत्तरं दत्तवान् धीरसिंहः।

अनन्तरक्षणे एव सीमन्तिनी उच्चैः आक्रोशनं कुर्वती विकटाट्टहासं प्रदर्शयन्ती च मूर्च्छां गतवती। तस्याः शरीरतः कृष्णवर्णीयः सर्परूपः कश्चन आकारः बहिः आगतः।

धीरसिंहः झटिति तस्याः आकृतेः शिरः बलात् गृहीत्वा कलशे स्थापयित्वा कलशस्य मुखम् आवरणेन सम्यक् पिधाय कलशं भूमौ निखानितवान्।

अनन्तरं सीमन्तिनी सचेतनतां प्राप्य मन्दं नेत्रे उन्मील्य– "किं प्रवृत्तम्? किम् एतत्?" इति पृच्छन्ती उत्थाय पितुः पार्श्वे



स्थितवती।

राजा आनन्दाश्रूणि स्रावयन् धीरसिंहस्य हस्तौ गृहीत्वा– "मम प्रियपुत्रीं दुष्टयक्षस्य बन्धनात् मोचितवान् भवान्। माम् अपि निन्दातः मोचितवान्। भवतः उपकारम् आजीवनं स्मरामि अहम्" इति सगद्गदम् उक्तवान्।

"सर्वम् दैवेच्छा। मया कर्तव्यं पालितं, तावदेव। निश्चिन्ताः भवन्तु भवन्तः। अहं कार्यविशेषस्य सिद्ध्यर्थं गच्छामि तावत्" इति उक्त्वा आत्मना उद्दिष्टं कार्यं महाराजं निवेदितवान्।

तदा महाराजः– "आं, तादृशः कण्ठस्वरः अस्माभिः अपि श्रुतः। किन्तु सः कुतः आगच्छति इति न जानीमः। बुद्धिशाली साहसी च भवान् निश्चयेन सफलः भविष्यति" इति आशिषा अनुगृह्य धीरसिंहं प्रेषितवान्।

धीरसिंहः दक्षिणदिशि प्रयाणम् अनुवर्तितवान्। दिनत्रयस्य प्रयाणस्य अनन्तरं सः विशालां मरुभूमिं प्राप्तवान्।

तदा तु मध्यरात्रसमयः। सर्वत्र गाढान्धकारः। अमावास्या तिथिः। आकाशे नक्षत्राणि प्रकाशन्ते।

अकस्मात् तत्र झञ्झावातः उत्पन्नः। वलयरूपेण आवर्तमानः सः पुलिनम् आकाशपर्यन्तम् अनयत्। एतन्मध्ये तेन वायुना धीरसिंहः अपि नीतः। दक्षिणदिशि कस्यचित् वृक्षस्य अधः पातितः च। धीरसिंहः उत्थाय नेत्रे उन्मील्य परितः दृष्टिं प्रसारितवान्। तावता तेन अश्वस्य खुरपुटध्वनिः श्रुतः। सः उत्थाय शब्दम् अनुसृत्य दृष्टिं प्रसारितवान्। तदीयः एव अश्वः तेन तत्र दृष्टः। समीपे एव कश्चन लघुपर्वतः आसीत्। अश्वः धावन् पर्वतस्य आरोहणम् अकरोत्। धीरसिंहः अपि अश्वम् अनुसरन् पर्वतम् आरूढवान्। पर्वतस्य अपरपार्श्वे तृणमयः विशालः प्रदेशः आसीत्। अश्वः तत्र तृणानि चरति स्म।

अत्रान्तरे 'टिङ्ग्, टिङ्ग्' इति द्वादश घण्टावादनानि श्रुतानि। विचित्रः प्रकाशः तत्र व्याप्तः। धीरसिंहेन दृष्टं यत् विचित्रेण वेषभूषणेन युताः केचन सैनिकाः इव

भासमानाः निरायुधाः पुरुषाः तं प्रदेशम् आगच्छन्तः सन्ति इति। ते पुरुषाः अमूल्यानि आभरणानि धृतवन्तः आसन्। तेषां शरीरतः सुगन्धः प्रसरति स्म। ते अग्रे आगत्य तृणमये प्रदेशे प्रसारितस्य रत्नकम्बलस्य उपरि पङ्क्तिशः उपविष्टवन्तः।

ततः अनतिदूरे कश्चन वृद्धः उपविष्टः आसीत्। तस्य शरीरं नितरां कृशम्। छिन्नेन वस्त्रेण सः शरीरम् आच्छादितवान् आसीत्। केशाः विकीर्णाः धूलिमयाः च दृश्यन्ते स्म। तस्य मुखात् आर्तस्वरः निर्गतः– "हा हन्त! सत्कार्यं किमपि कर्तुम् अशक्नुवतः मम एषा अमावास्या अपि अतिक्रामति खलु?" इति।

किञ्चित्कालानन्तरं तत्र उपविष्टानां पुरतः सुवर्णस्थालिकाः आगताः। स्थालिकासु भक्ष्यादीनि अपि आगतानि। तेषु अन्यतमः भक्ष्यपूर्णां स्थालिकां प्रदर्शयन् धीरसिंहम् उक्तवान्– "किमर्थं दूरे स्थित्वा पश्यति? आगच्छतु अत्र। सहैव भोजनं करवाम" इति।

धीरसिंहः तस्य आह्वानम् अङ्गीकृत्य कस्याश्चित् स्थालिकायाः पुरतः उपविष्टवान्।

तस्य वराकस्य वृद्धस्य पुरतः तु स्थालिकादिकं किमपि न आसीत्। यदा सर्वे भोजनार्थम् उद्युक्ताः तदा तस्य वृद्धस्य पुरतः मृच्छदखण्डः तदुपरि मृत्तिकपाषाणादयः च आगताः। सर्वे सन्तोषेण भोजनरसास्वादने मग्नाः चेत् सः वृद्धः तु दैन्यपूर्णया दृष्ट्या तान् पश्यति!





एतत् सोढुम् अशक्तः धीरसिंहः तान् सैनिकान् दृष्ट्वा पृष्टवान्– "हन्त! तेन वृद्धेन कः अपराधः कृतः? तस्मै भोजनम् अयच्छन्तः भवन्तः मृत्तिकापाषाणादीनां दानेन किमर्थं तम् उपहसन्ति?" इति।

तदा ते सर्वे एककण्ठेन उक्तवन्तः– "तम् एव पृच्छतु। सः स्वयं वदति" इति।

धीरसिंहः स्वस्य पुरतः स्थितम् आहारं द्विधा विभज्य एकं भागं वृद्धस्य पुरतः स्थापयन् तम् उक्तवान्– "खादतु भोः" इति। किन्तु क्षणमात्रेण तानि आहारवस्तूनि मृत्तिकारूपं प्राप्तवन्ति आसन्।

"किम् एतत् विचित्रम्? किमर्थम् एवं भवति? भवता कःअपराधः कृतः?" इति आश्चर्येण पृष्टवान् धीरसिंहः।

"सा च काचित् कथा। इतः दशयोजनदूरे स्थिते विदिशानामके नगरे निवसन् धनगुप्तनामकः कोट्यधीशः वणिक् आसम् अहम्। अपारा सम्पत्तिः आर्जिता आसीत् मया। किन्तु तदा मया दानधर्मादिकं सर्वथा विस्मृतम् आसीत्। शुनककाकादिभ्यः अपि आहारः न दत्तः मया। ये दानं कुर्वन्ति तान् बहुधा उपहसितवान्। शक्यं चेत् अन्येन क्रियमाणं दानं निवारयामि स्म अपि। कर्मकरेभ्यः योग्यं वेतनं कदापि न दत्तवान्। तान् बहुधा पीडयामि स्म। पञ्चविंशतिवर्षेभ्यः पूर्वं, वाणिज्यार्थं दूरदेशं गन्तुम् इच्छन् उष्ट्राणाम् उपरि मणिमाणिक्यादिकं, पट्टवस्त्राणि च आरोप्य बहुभिः कर्मकरैः सह प्रयाणम् आरब्धवान्। मरुभूमिमार्गे लुण्ठाकाः अस्मान् सर्वान् मारयित्वा अत्रैव निखातवन्तः। इदानीं मम पुरतः सुखेन उपविश्य ये भोजनं कुर्वन्ति ते पूर्वं ममैव सेवकाः आसन्। ते यथाशक्ति दानं कृतवन्तः इत्यतः स्वर्गसुखम् अनुभवन्तः सन्ति। धर्मविरुद्धमार्गेण कृपणवृत्त्या अहं जीवितवान् इत्यतः एषा नरकबाधा मम। ममैव सेवकानां पुरतः एवं नरकदुःखम् अनुभवन् अस्मि" इति वदन् अश्रूणि स्रावितवान् सः वृद्धः।

"एतस्याः दुस्थितेः मोक्षं प्राप्तुं कोऽपि मार्गः नास्ति वा? यदि स्यात् तर्हि वदतु।

यथाशक्ति साहाय्यं करिष्यामि" इति उक्तवान् धीरसिंहः।

"मया सम्पादिता समग्रा सम्पत्तिः मम गृहस्य पृष्ठतः पक्षद्वारात् दशव्यामदूरे गर्ते स्थापिता आसीत्। एतां वार्ताम् अजानन्तः मम त्रयः पुत्राः दारिद्र्यवशात् खिन्नाः सन्ति। भूमिस्थां तां सम्पत्तिं बहिः आनीय चतुर्धा विभज्य भागत्रयं लोकहितार्थम् उपयुज्य शिष्टः भागः मम पुत्रेभ्यः समरूपेण विभज्य दत्तः चेत् मया सद्गतिः प्राप्यते। तदा एव मम एतस्मात् नरकवासतः मोक्षः" इति उक्तवान् वृद्धः धनगुप्तः।

एतत् श्रुत्वा धीरसिंहः ततः साक्षात् विदिशानगरं गत्वा धनगुप्तपुत्रान् दृष्ट्वा धनगुप्तस्य वचनं श्रावितवान्। किन्तु ते एतस्मिन् वचने न विश्वसितवन्तः। धीरसिंहस्य सूचनानुसारं यदा खननं कृतं तदा धनराशिः प्राप्तः। एतेन ते धीरसिंहे विश्वसितवन्तः। अनन्तरं पितुः इच्छानुसारं सम्पत्तिं चतुर्धा विभज्य एकं भागं परस्परं विभज्य स्वीकृत्य भागत्रयं लोकहितार्थम् उपयुक्तवन्तः। तेषां जीवनं सुखमयं जातम्।

अग्रिमायाम् अमावास्यायां धीरसिंहः मरुभूमौ स्थितं पर्वतं गतवान्। तद्दिने तु धनगुप्तः अपि उत्तमैः वेषभूषैः अलङ्कृतः हसन्मुखः सन् सर्वैः सह सन्तोषेण भोजनं कुर्वन् आसीत्। एतत् दृष्ट्वा धीरसिंहः तृप्तिं प्राप्तवान्। धनगुप्तः तु धीरसिंहं दृष्ट्वा कृतज्ञतापूर्वकम् आनन्दाश्रूणि स्रावितवान्।

कृतकृत्यः धीरसिंहः अश्वम् आरुह्य कौशाम्बीं प्रत्यागतवान्। धनगुप्तस्य इतिवृत्तं सुलोचनां श्रावितवान्।

"भवतः वचनं सत्यम्। गतायाम् अमावास्यायां रात्रौ स च आर्तस्वरः न श्रुतः। भवान् न केवलं धीरः शूरः च, अपि तु परोपकारी अपि। श्लाघ्यः गुणः भवतः। श्वः अहं चतुर्थं प्रश्नं श्रावयिष्यामि" इति उक्त्वा सुलोचना धीरसिंहं विश्रान्तिगृहं प्रति प्रेषितवती।

—(अनुवर्तते)






# स्वातन्त्र्येण प्रवृत्तिः

कस्याञ्चित् क्रीडास्पर्धायां भागं वहन् इव त्रिविक्रमः वेतालेन उपस्थापिताः समस्याः लीलया परिहरन् पराजयम् एव अजानन् पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगत्य यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान्। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! भवान् स्वकीयं श्रमं, समयं, सामर्थ्यं, बुद्धिमत्तां च स्वप्रयोजनार्थम् उपयुञ्जानः अस्ति उत अन्यनिमित्तम् इत्येव मम इतोऽपि सन्देहः। अन्यनिमित्तं प्रतिभादीनां व्ययं विरलाः एव कुर्वन्ति। अधिकांशाः जनाः तु स्वप्रयोजनार्थम् एव प्रयतन्ते। अत्र उदाहरणरूपेण सुदर्शननामकस्य कथां श्रावयामि। सः सुदर्शनः येन उपकृतः अभवत् तमपि उपेक्ष्य स्वप्रयोजनं साधितवान्। एतस्याः कथायाः श्रवणेन अन्यत् प्रयोजनं न

## वेतालकथा



सिद्धं चेदपि मार्गायासस्य परिहारः तु भविष्यति एव। कथां श्रद्धया शृणोतु तावत्" इति।

अनन्तरं वेतालेन कथा आरब्धा—

पूर्वं कन्याकुब्जदेशे रत्नगुप्तः नाम वणिक् आसीत्। सः बहुविधैः वाणिज्यतन्त्रैः कोट्यधीशः जातः। यद्यपि सः इदानीं वार्धके अस्ति तथापि सः वाणिज्यात् निवृत्तिं प्राप्तुं न इच्छति। समुद्रवाणिज्येन विशेषलाभः सम्पादनीयः इति तस्य इच्छा। अद्यावधि तेन समुद्रवाणिज्यविषये विशेषतः ज्ञानं सम्पादितम् आसीत् चेदपि स्वयं न प्रवृत्तम् आसीत्।

पूर्वद्वीपेषु निवसन्तः जनाः सुगन्धद्रव्यस्य विषये अत्यासक्ताः इति जानाति स्म रत्नगुप्तः। अतः सः सुगन्धद्रव्यस्य वाणिज्यम् आरब्धवान्। पूर्वद्वीपेषु सुगन्धद्रव्यं विशेषलाभेन विक्रीतवान् सः। वाणिज्यात् विरतिं सर्वथा न इच्छति खलु रत्नगुप्तः? अतः सः विशेषोत्साहेन समुद्रवाणिज्यम् इतोऽपि विस्तारितवान्।

कदाचित् सः सुगन्धद्रव्याणि नौकायाम् आरोप्य पूर्वद्वीपेषु अन्यतमस्य द्वीपस्य राजधानीं प्राप्तवान्। तत्र कस्याञ्चित् धर्मशालायां वसतिं कल्पितवान् च। 'अपूर्वाणि सुगन्धद्रव्याणि आगतानि सन्ति। ये इच्छन्ति ते मत्सकाशम् आगन्तुम् अर्हन्ति' इति प्रकटितवान् सः।

अनन्तरदिने वाणिज्यं विशेषतः प्रवृत्तम्। अधिकांशानि वस्तूनि विक्रीतानि अभवन्। तद्दिने रात्रौ रत्नगुप्तः भोजनानन्तरं विक्रीतानां वस्तूनां पट्टिकां गृहीत्वा दीपस्य प्रकाशे पठितुम् आरब्धवान्।

अर्धरात्रः अतीतः चेदपि तदीया गणना न समाप्ता। गणनायां सामञ्जस्यम् अपश्यन् रत्नगुप्तः अतिक्रामन्तीं रात्रिम् अपि न लक्षितवान्।

धर्मशालायां कश्चन युवकः अपि सुप्तः आसीत्। कस्याञ्चित् आलोचनायां मग्नः सः निद्रां न प्राप्तवान्। सः रत्नगुप्तस्य व्यवहारं परिशीलयन् आसीत्।

रत्नगुप्तेन गणनायां कश्चन क्लेशः अनुभूयमानः अस्ति इति ज्ञातं तेन। वृद्धस्य

एतां दयनीयाम् अवस्थां दृष्ट्वा सः नितरां खिन्नः। 'एतस्य साहाय्यं करोमि वा? साहाय्यार्थं गमनम् उचितं भवेत् वा?' इति द्वैधीभावेन पीडितः सः किञ्चित्कालं मौनं स्थितवान्।

अन्ते सः रत्नगुप्तस्य समीपं गत्वा पृष्टवान्– "श्रीमन्! मम नाम सुदर्शनः इति। अर्धरात्रे भवान् एवं गणनायां किमर्थं क्लेशम् अनुभवन् अस्ति? तावत्या त्वरया समापनीयं वा एतत्? श्वः प्रातः समापितं चेत् का हानिः भवेत्?" इति।

रत्नगुप्तः शिरः उन्नीय क्षणकालं सुदर्शनं दृष्ट्वा उक्तवान्– "भोः, अहं कश्चन वणिक्। आदिनं नगरे वाणिज्ये व्यापृतः आसम्। इदानीं गणनायां सामञ्जस्यं न दृश्यते। मम वाणिज्यस्य गणना मया एव परिशीलनीया खलु? तत्तद्दिनस्य गणनां तत्तद्दिने समापयामि। एषः मम अभ्यासः" इति।

"भवतः आक्षेपः यदि न स्यात् तर्हि तत् अत्र ददातु। अहं गणनां समीकृत्य दास्यामि" इति उक्तवान् सुदर्शनः।

तदा रत्नगुप्तः उक्तवान्– "भवतः किमर्थं कष्टम्? एषा गणना तावत् सुलभा न। अल्पानि, मध्यमानि, महान्ति च वस्तूनि विक्रीतानि सन्ति। अतः अत्र महान् परिश्रमः करणीयः भवति" इति।

"श्रीमन्! गणितं मम प्रियः विषयः। बाल्यतः अपि गणिते मम विशेषासक्तिः। गणितशास्त्रे प्रावीण्यम् अपि सम्पादितवान्





अस्मि। भवतः गणना अतीव क्लेशकरी चेदपि सा मम उत्साहवर्धिनी क्रीडा" इति उक्त्वा सुदर्शनः रत्नगुप्तहस्ततः गणनापुस्तकं स्वीकृत्य अल्पे एव काले गणनां समीकृत्य दत्तवान्। रत्नगुप्तः एतत् दृष्ट्वा आश्चर्यचकितः अभवत्।

रत्नगुप्तः कृतज्ञतावचनानि उक्त्वा सुदर्शनस्य इतिवृत्तं कुतूहलेन पृष्टवान्।

तदा सुदर्शनः उक्तवान्– "मम पिता अपि वाणिज्येन एव जीवति स्म। केभ्यश्चित् वर्षेभ्यः पूर्वं वयं कन्याकुब्जतः अत्र आगत्य अत्रैव वसतिं स्थिरीकृतवन्तः। मम पिता वाणिज्ये महतीं हानिम् अनुभूय, तादृशस्थितौ स्वदेशं प्रतिगन्तुम् अनिच्छन् चिन्तया अन्नाहारं परित्यज्य शय्याम् आश्रितवान्। चिन्ताभारेण सः दिवङ्गतः चापि। पतिवियोगात् खिन्ना मम माता अपि अचिरात् एव दिवङ्गता। एवम् अहं मातापितृभ्यां विहीनं अनाथप्रज्ञया बाध्यमानः कार्यस्य अन्वेषणं कुर्वन् अत्र आगतवान् अस्मि। एषः एव मम पूर्ववृत्तान्तः" इति।

तदा रत्नगुप्तः अनुतापपूर्वकम् उक्तवान्– "भवादृशः समर्थः एवम् अनाथवत् न अटेत्। वाणिज्ये यदि भवतः आसक्तिः स्यात् तर्हि मया सह आगच्छतु। वाणिज्ये मम साहाय्यं करोतु। योग्यं वेतनं दास्यामि" इति।

सुदर्शनः सन्तोषेण एतं प्रस्तावम् अङ्गीकृतवान्। आत्मना आनीतानि सर्वाणि वस्तूनि विक्रीय वाणिज्यं समाप्य रत्नगुप्तः सुदर्शनेन सह स्वदेशं गतवान्। तीक्ष्णमतिः सुदर्शनः विनयपूर्णव्यवहारेण, बुद्धिकौशलेन, वाणिज्यकौशलेन च रत्नगुप्तस्य आदराभिमानं सम्पादितवान्।

केषाञ्चित् मासानाम् अनन्तर रत्नगुप्तः पुनरपि पूर्वद्वीपान् उद्दिश्य गन्तुं सन्नाहम् आरब्धवान्। किन्तु प्रस्थानात् द्वित्रेभ्यः दिनेभ्यः पूर्वं सः तीव्रम् अस्वस्थः जातः। शय्याम् आश्रितवान् सः चलितुम् अपि न शक्नोति।

वैद्यः परीक्ष्य सूचितवान् यत् मासत्रयं विश्रान्तिः अनिवार्या इति। तावत्पर्यन्तं

सङ्गृहीतानि वस्तूनि स्थापितानि चेत् तानि पूर्णतः नष्टानि भवन्ति इति रत्नगुप्तस्य आतङ्कः।

अतः सः सुदर्शनम् आहूय उक्तवान्– ''प्रस्थानसमये मम परिस्थितिः एवं जाता। अतः भवान् एव एतानि वस्तूनि पूर्वद्वीपं नयतु। दशलक्षरूप्यकाणां वस्तूनि सन्ति। एतेषां विक्रयणेन पञ्चदशलक्षं रूप्यकाणि प्राप्येरन्। गमनागमनादिव्ययस्य अनन्तरं चतुर्लक्षं रूप्यकाणि तु लाभरूपेण प्राप्यन्ते एव। गत्वा अविलम्बेन आगच्छतु'' इति।

एतत् अङ्गीकृत्य सुदर्शनः नौकया पूर्वद्वीपान् प्राप्तवान्। पूर्वं यत्र रत्नगुप्तः निवसति स्म तत्रैव वसतिं कृतवान् एषः अपि। तत्र केषाञ्चित् वणिजां परिचयः जातः।

ते वार्तालापसन्दर्भे उक्तवन्तः– ''सुगन्धद्रव्यस्य ग्राहकाः अत्र सन्ति इति तु निश्चितम् एव। किन्तु मासानन्तरं मूल्यवर्धनस्य निरीक्षा दृश्यते। द्विगुणितः लाभः तु प्राप्येत एव। अतः धैर्येण तावत् निरीक्षा एव उचिता। वयं तु तथैव निश्चितवन्तः। भवान् अपि वयम् इव वणिक् इत्यतः सहानुभूत्या एवम् उक्तवन्तः। इतः परं भवान् एव प्रमाणम्'' इति।

सुदर्शनः क्षणकालम् आलोच्य– ''नैव, अहं प्रतीक्षां न करिष्यामि। यावच्छीघ्रं प्रतिगन्तव्यं मया'' इति तान् उक्तवान्।

एतदनुगुणम् आनीतानि वस्तूनि अल्पेन एव कालेन विक्रीय स्वदेशं प्रतिगतवान्। सुदर्शनस्य अनुभवं श्रुत्वा रत्नगुप्तः





सुदर्शनाय लाभे पादभागं दत्तवान्।

केषाञ्चित् मासानाम् अनन्तरं सुदर्शनः वाणिज्यार्थं पूर्वद्वीपम् गन्तुम् इष्टवान्। सुदर्शनस्य वाणिज्यासक्तिं दृष्ट्वा सन्तुष्टः रत्नगुप्तः– "वाणिज्ये तृप्तिः आलस्यं वा कदापि न भवेत्। स्वातन्त्र्येण निर्णयः प्रगतेः सोपानम्। गत्वा विजयं सम्पाद्य आगच्छतु। प्राप्ते लाभे अर्धं भवते एव दास्यामि। शुभं भवतु" इति उक्तवान्।

सुदर्शनः बहूनि वस्तूनि स्वीकृत्य पूर्वद्वीपान् गत्वा यत्र गतवर्षे वसतिः कृता तत्रैव वसतिं कृतवान्।

"एतत्सन्दर्भे अधिकः लाभः यावत् प्राप्येत तावत् प्रतीक्षां करिष्यामि अहम्। विक्रयणे त्वरां न करिष्यामि" इति तत्रस्थान् वणिजः उक्तवान् सः।

सुदर्शनस्य निरीक्षा सफला एव जाता। सुगन्धद्रव्याणि विशेषमूल्येन विक्रीतानि। एतत्सन्दर्भे तेन द्विगुणितः लाभः सम्पादितः आसीत्।

प्रत्यागमनार्थं त्वराम् अप्रदर्शयन् सुदर्शनः विपण्यां सञ्चारं कृत्वा सर्वं परिशील्य अन्ते दन्तनिर्मितानि वस्तूनि क्रीत्वा स्वदेशं प्रत्यागतवान्।

तस्य देशे गृहालङ्कारे आसक्ताः धनिकाः बहवः आसन्। अतः सुदर्शनेन आनीतानि दन्तनिर्मितानि वस्तूनि अल्पे एव काले विक्रीतानि अभवन्।

सुदर्शनस्य एतादृशीं वाणिज्यदक्षतां दृष्ट्वा सन्तुष्टः रत्नगुप्तः कदाचित् तं स्वसमीपम् आहूय पृष्टवान्– "वत्स, सुदर्शन! बहुभ्यः दिनेभ्यः भवान् किञ्चित् वक्तव्यः इति चिन्तयन् अस्मि। मम तु एका एव पुत्री। भवतः गुणैः व्यवहारेण च अहं सन्तुष्टः अस्मि। भवन्तं जामातृत्वेन इच्छामि। किम् एतत् अनुमतं वा भवतः?" इति।

सुदर्शनः अङ्गीकारं सूचितवान्। अनन्तरम् अल्पे एव काले रत्नगुप्तपुत्र्याः सुदर्शनस्य च विवाहः सवैभवं सम्पन्नः।

वेतालः एवं कथां समाप्य अवदत्– "राजन्! सुदर्शनस्य व्यवहारः तृप्तिकरः

नास्ति इति मम अभिप्रायः। यदा सः रत्नगुप्तस्य आधीन्ये उद्योगी आसीत् तदा अन्यवणिजां वचनम् अनादृत्य द्विगुणितस्य लाभस्य सम्भावनायाम् अपि, त्वरया वस्तूनि विक्रीतवान्। यदा लाभांशे सः भागहरः जातः तदा लाभप्रतीक्षायां कानिचन दिनानि द्वीपे स्थितवान्। दन्तनिर्मितानि वस्तूनि स्वदेशम् आनीय विक्रीय लाभं सम्पादितवान्। प्रथमवारं सः स्वशक्तेः बुद्धेः च विनियोगं कर्तुं न इच्छति स्म इति भाति। यतः तथा कृतं चेत् यजमानस्य लाभः अभविष्यत्, न तु स्वस्य। द्वितीयवारं तु लाभे अर्धं प्राप्यते इति उद्देशेन स्वप्रतिभया लाभं सम्पादितवान्। एवं सुदर्शनः सर्वथा स्वार्थपरः दृश्यते खलु? रत्नगुप्तः सुदर्शनस्य स्वार्थपरतां ज्ञातुं किं न शक्तवान्? तावद्ज्ञानी न वा सः रत्नगुप्तः? एतेषां सन्देहानां परिहारं जानन् अपि भवान् यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा त्रिविक्रमः एवम् उक्तवान्– ''भोः, सुदर्शनः स्वार्थपरः सर्वथा न। प्रथमवारं यदा वाणिज्यार्थं गतवान् तदा तु सः अन्यस्य आधीन्ये उद्योगी आसीत्। यजमानेन यावत् उक्तं तावत् एव करणीयं भवति उद्योगिना। स्वातन्त्र्येण निर्णयस्य अधिकारः तस्य न भवति। अनन्तरसन्दर्भे तु सः लाभांशस्य भागहरः। अतः नष्टं सोढुम् अपि सः सिद्धः एव। अतः सः स्वातन्त्र्येण निर्णयं स्वीकृत्य साहसं प्रदर्शितवान्। निरीक्षानुगुणं साफल्यं सम्पादितवान् अपि। एवं सुदर्शनः उद्योगिरूपेण विधेयतां, यजमानरूपेण बुद्धिमत्तां साहसप्रवृत्तिं च प्रदर्शितवान्। अनुभवी वणिक् रत्नगुप्तः एतदुभयम् अपि परिशील्य एव तं जामातरं कृतवान्। अतः सुदर्शनस्य रत्नगुप्तस्य वा व्यवहारे अनौचित्यं किमपि नास्ति'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः बेतालः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



# वस्त्राडम्बरः

कस्यचित् कृषिकस्य प्राप्तवयस्कः एकः पुत्रः आसीत्। वस्त्राडम्बरे तस्य महान् आदरः। 'उत्तमानि वस्त्राणि धृत्वा सञ्चरामि चेत् सर्वे मां महापुरुषं मन्यन्ते' इति भावयति स्म सः।

पित्रे पुत्रस्य एषः व्यवहारः न रोचते। एकदा सः कृषिकः बन्ध्यां धेनुं प्रदर्शयन् पुत्रम् उक्तवान्– "एतां स्नापयित्वा अलङ्कृत्य नगरं नीत्वा विक्रीय आगच्छतु" इति।

पुत्रः पितुः वचनं पालयन् धेनुं स्नापयित्वा अलङ्कृत्य नगरं नीतवान्। सर्वे धेनुं दृष्ट्वा– "एषा कियत् क्षीरं ददाति?" इत्येव पृच्छन्ति। कोऽपि तस्याः अलङ्कारादिकं न पश्यति।

सायङ्कालपर्यन्तम् अपि पुत्रः तस्याः विक्रयणार्थं बहुधा प्रयत्नं कृतवान्। अन्ते हताशः सन् धेन्वा सह गृहं प्रत्यागतवान् सः।

"किं, कोऽपि धेनुं न क्रीतवान्?" इति पृष्टवान् पिता।

"न भोः, सर्वे अपि पृच्छन्ति– एतया कियत् क्षीरं दीयते इति। एतस्याः अलङ्कारादिकं कोऽपि न पश्यति" इति खेदेन उक्तवान् पुत्रः।

"इदानीं वा ज्ञातं स्यात् खलु– बाह्याडम्बरेण किमपि प्रयोजनं नास्ति इति। जनाः सदाऽपि अन्तःसत्त्वं पश्यन्ति, न तु बाह्यम् आडम्बरम्" इति उक्तवान् पिता।

पितुः वचनं पुत्रस्य मनसि सम्यक् लग्नम्। तद्दिनतः सः वस्त्राडम्बरे आसक्तिं परित्यज्य परिश्रमेण कार्यं कुर्वन् गुणानां सम्पादने प्रयत्नं कुर्वन् सज्जनः जातः।



# चन्दमामानुबन्धः — ६

# ज्ञानभाण्डागारम्

## एतन्मासीयम् ऐतिहासिकं व्यक्तित्वम्—



## तेग् बहादुरः

एप्रिल्मासस्य प्रथमे दिनाङ्के १६२१ तमे वर्षे तेग् बहादुरः अमृतसरे जन्म प्राप्तवान्, योऽयम् अनन्तरकाले नवमः सिक्खगुरुः जातः। सः षष्ठस्य सिक्खगुरोः हरगोविन्दस्य पुत्रः। तेग् बहादुरः बाल्यतः अपि बहुषु विषयेषु आसक्तः आसीत्। ध्याननिमग्नः सन् समयं यापयति यथा तथा सः इतिहासे, साहित्ये, गणिते च विना श्रमं परिणतिम् अपि सम्पादयति। सङ्गीते काव्ये च सः अतीव निपुणः। एवम् एव आयुधचालने तस्य असदृशं कौशलम्। अश्वारोहणे तु सः अद्वितीयः। १६६४ तमे वर्षे गुरोः हरिकिशनस्य मरणं यदा जातं तदा तेग्बहादुरः गुरुः जातः। सः सर्वत्र प्रवासं कृतवान्, प्रार्थनासभाः आयोजितवान् च। नूतनस्य नगरस्य आनन्दपुरस्य स्थापकः एषः एव।

मोगलचक्रवर्ती औरङ्गजेब् तत्काले भयम् उत्पादयन् आसीत्। 'इस्लां मतं स्वीकुर्वन्तु' इति ब्राह्मणान् बलात्करोति स्म सः। अतः केचन ब्राह्मणाः तेग् बहादुरं दृष्ट्वा आत्मानः रक्षणं प्रार्थितवन्तः।

गुरोः तेगहादुरस्य सूचनानुसारं ते औरङ्गजेबम् उक्तवन्तः— "यदि तेग् बहादुरः स्वस्य मतान्तरणम् अङ्गीकरोति तर्हि वयम् अपि इस्लां मतम् अङ्गीकर्तुं सिद्धाः" इति।

औरङ्गजेबः तेग् बहादुरं बद्धवान्, आदिष्टवान् च— 'इस्लां मतम् अङ्गीकरोतु, इन्द्रजालं प्रदर्शयतु वा' इति। तेग् बहादुरः उभयम् अपि निराकृतवान्। १६७५तमे वर्षे नवेम्बर् एकादशे दिनाङ्के सः मारितः जातः।

## सः कः स्यात्?

कश्चन तरुणः सार्वजनिकमार्गेषु गमनं परिहरन् निर्जने प्रदेशे गच्छन् आसीत्। राज्ञः भटाः तस्य अन्वेषणं कुर्वन्तः आसन्। यतः सः तरुणः राज्ञः कोपस्य पात्रम् आसीत्।

एवं गच्छन् सः कुत्रचित् एकं वस्त्रालङ्काररहितं ब्राह्मणं दृष्टवान्। स च ब्राह्मणः विशिष्टेन जलेन दर्भमूलं सिञ्चन् आसीत्।

"किं कुर्वन् अस्ति भवान्?" इति पृष्टवान् सः तरुणः।

"अहं मधुरं जलम् एतेषां दर्भाणां मूलं प्रापयन् अस्मि। जलस्य माधुर्येण आकृष्टाः पिपीलिकाः दर्भाणां मूलं खादेयुः इति मम आशयः" इति उत्तरं दत्तवान् ब्राह्मणः

"एवं केमर्थं करोति?" इति कुतूहलेन पृष्टवान् तरुणः।

"यतः एतैः तृणैः मम पादतलं व्रणितं जातम्। रक्तस्रावश्च जातः। अतः एतानि समूलं नाशयितुम् इच्छामि" इति उक्तवान् ब्राह्मणः।

'एषः ब्राह्मणः सङ्कल्पशक्तिमान्' इति ज्ञातवान् सः तरुणः। ब्राह्मणः अपि राज्ञा अपमानितः आसीत्। अतः तौ आत्मीयौ जातौ।

एषा कल्पिता कथा स्यात् नाम, तथापि अत्र ब्राह्मणस्य तस्य स्वभावः रमणीयतया चित्रितः अस्ति।

वदन्तु, सः ब्राह्मणः कः स्यात्?

(उत्तरम् अष्टमे पृष्ठे)

# विज्ञानविनोदः






## बीजस्य अन्तः

**एवं कुर्वन्तु –**

निष्पावबीजम्, अन्यत् शोषितं बृहत् बीजं वा एकरात्रं यावत् ततोऽप्यधिककालं वा जले स्थापयन्तु। यदा तत् सम्यक् मृदु भवति तदा तत् जलात् बहिः आनयन्तु। शिथिलम् आवरणं जागरूकतया अपनीय बीजस्य उभयं दलं पृथक्कुर्वन्तु। दलयोः मध्ये किं दृश्यते? तत् किम् इति ज्ञातुं योग्यः आकारः अस्ति वा तस्य? भवतां समीपे मध्योन्नतकाचः यदि स्यात् तर्हि तद्द्वारा एतत् स्पष्टं ज्ञातुम् अर्हन्ति भवन्तः।



**किं भवति, किमर्थं च भवति?**

लघ्वाकारकम् अङ्कुरं तत्र पश्यन्ति भवन्तः। तं च भ्रूणनाम्ना व्यवहरन्ति शास्त्रे। सूक्ष्मरूपेण परिशीलनेन तत्र पर्णद्वयं, काण्डसदृशीं रचनां च पश्यन्ति भवन्तः। मध्योन्नतकाचद्वारा, तीक्ष्णया दृष्टिशक्त्या वा पर्णस्थाः नाड्यः अपि द्रष्टुं शक्याः। निष्पावखादनसमये एतान् भ्रूणान् दृष्टवन्तः स्युः भवन्तः, आश्चर्यचकिताः अपि जाताः स्युः कदाचित्।

समीपतः भ्रूणस्य काण्डभागस्य दर्शनेन काण्डः दले कुत्र संलग्नः इति ज्ञातुं शक्यते। यदा भ्रूणः प्रवर्धते तदा काण्डतलं मूलरूपं प्राप्नोति। बीजदले च पत्राकारतां प्राप्नुतः। बीजपत्रम् इति तस्य नाम। यावत् सस्यं मूलसाहाय्येन आहारं ग्रहीतुं न शक्नोति तावत् आहारव्यवस्थापनम् अनयोः कार्यम्।

अण्डानि इव बीजानि अपि भ्रूणयुतानि भवन्ति। केषुचित् भ्रूणः सूक्ष्मरूपेण भवति इत्यतः दृष्टिगोचरः न भवति। कानिचन अङ्कुरितानि धान्यानि भूमौ आरोप्य तेषां वर्धनक्रमः कुतो वा न परिशीलनीयः भवद्भिः?

दलद्वयं सर्वेषु धान्येषु न भवति। दलद्वययुताः निष्पावादयः द्विदलाः इत्युच्यन्ते। व्रीह्यादयश्च एकदलाः इत्युच्यन्ते। भवन्तः यानि धान्यानि जानन्ति तेषु एकदल-द्विदलविभागः कुतो वा न करणीयः भवद्भिः?



# विश्ववैचित्र्यम्

## हेलिकार्नासस्नगरीयं स्मारकभवनम्

सार्धद्विसहस्रवर्षेभ्यः पूर्वं ततोऽपि पूर्वं वा एजियन्समुद्रतीरे सुन्दरं किञ्चन नगरम् आसीत्। तस्य नाम हेलिकार्नासस् इति। ग्रीक्जनानां वसतिस्थानम् आसीत् एतत्। एतस्मिन् नगरे कारिक्राजस्य मौसोलस्नामकस्य शवस्थानस्य उपरि तस्य पत्न्या अर्थेमिसियाराज्ञ्या रमणीयं स्मारकं स्थापितम्। एतत् स्मारकं परितः स्थितः दुर्गप्रदेशः प्रत्येकस्मिन्नपि पार्श्वे ३०० मैल्विस्तृतः आसीत्। एतत् स्मारकम् अपूर्वम् आसीत्, प्राचीनजगतः सप्तसु अद्भुतेषु अन्यतमम् इति परिगण्यते स्म चापि। एतत् स्मारकं क्रि.पू. ४ शतके निर्मितम् आसीत्, क्रि.श. चतुर्थे च शतके तुर्कजनैः नाशितम् अभवत्।

अपूर्वा: ऐतिहासिकघटना:




# समृद्धस्य सार्वभौमस्य गर्वभङ्गः

अद्वितीयश्रीमान् इति ख्यातः क्रूयेसस् नाम सार्वभौमः षष्ठे शतके लिडियादेशं (एशियामैनर् प्रदेशस्थं) पालयति स्म। अद्यापि 'क्रूयेसस्' इत्येतत् ऐश्वर्यस्य पर्यायपदम् इव अस्ति। 'क्रूयेसस् इव धनिकः' इति वाक्यं समृद्ध्यतिशयं द्योतयति। क्रूयेसस्काले सोलन्नामकः तत्त्वज्ञानी आसीत्। कदाचित् क्रूयेसस् आत्मानं परमसुखिनम् उक्तवान्, यतः तस्य समीपे सर्वाः आशाः पूरयितुं समर्थम् अतुलैश्वर्यम् अधिकारबलं च अस्ति। किन्तु सोलन् गम्भीरस्वरेण तम् उक्तवान्— "जीवितकालः यदि अग्रे अस्ति तर्हि ततः पूर्वं कमपि सुखिनं वक्तुं न शक्नुमः" इति। क्रूयेससाय तत्त्वज्ञानिनः वचनं सर्वथा न अरोचत।

डेल्फिनगरे स्थितैः देवपूजकैः उच्यमाने भविष्यवचने क्रूयेससस्य विश्वासः आसीत्। सः पर्शियादेशं जेतुं चिन्तयन् आसीत्। एतस्याः युद्धयात्रायाः परिणामः कः भवेत् इति जिज्ञासा तस्य।

डेल्फीया दिव्यवाणी असूचयत्— 'पर्शियाम् उद्दिश्य क्रियमाणया युद्धयात्रया समृद्धः प्रदेशः कश्चन विनाशं गमिष्यति' इति। 'एतस्य अर्थः— पर्शिया नाशं गमिष्यति इति' इति चिन्तितवान् क्रूयेसस्। पर्शियां वशीकर्तुं सः ४,२०,००० पदातिभिः, ६०,०००



अश्वारोहिभिः च सह प्रस्थितवान्। किन्तु दुर्दैववशात् स्वयं पराजितः अभवत्। लिडिया समूलं नष्टा। क्रूयेसस् बन्दी जातः।

पर्शियाराजः सैरस् तस्य सजीवदाहम् आज्ञापितवान्। तस्य हस्तौ बद्ध्वा भटाः तं चितासमीपम् आनीतवन्तः। तदा सः उच्चैः उद्गारं प्रकटितवान्— "अये! सोलन्!" इति।

सैरस् एतत् श्रुत्वा तं पृष्टवान्— "किमर्थं तथा सोलन्नामकं स्मृतवान्?" इति।

तदा क्रूयेसस्— "सोलन् कश्चन तत्त्वज्ञानी। तेन यत् उक्तं तत् सत्यम् एव जातम्" इति वदन् पूर्वतनं वृत्तान्तं श्रावितवान्।

एतत् श्रुतवतः सैरसस्य मनः दयार्द्रं जातम्। क्रूयेससस्य मारणाज्ञां प्रतिस्वीकृत्य तं स्वमित्रं कृतवान् सैरस्।



## भारतीये इतिहासे कटाक्षपातः



१. ईस्ट् इण्डिया संस्थया त्रयाणां ग्रामाणां क्रयणार्थं कियत् धनं दत्तं ये च ग्रामाः अनन्तरकाले कलकत्तानगररूपेण परिवृत्ताः?
२. तेषां ग्रामाणां विक्रेता कः?
३. संस्थाप्रतिनिधिः कः तान् ग्रामान् क्रीतवान्?
४. तेषां ग्रामाणां नामानि कानि?
५. आधुनिकं तत् नगरं किं, यस्य च नाम 'हेप्टानेसिया' इति ग्रीक्-इतिहासज्ञेन टालमीमहोदयेन कृतम् आसीत्, यस्य नाम्नः च अर्थः, सप्तानां द्वीपानां समूहः इति?
६. मुम्बयीनगरं के विदेशीयाः सर्वप्रथमं स्वायत्तीकृतवन्तः?
७. कः सेनानायकः कदा तत् नगरं वशम् आनीतवान्?
८. सः कथं वशीकृतवान्?
९. तस्य ग्रामस्य नाम किम्, यश्च ग्रामः अनन्तरकाले मद्रास्-नगररूपेण परिवृत्तः?
१०. देहलीनगरम् इदानीं यत्र अस्ति तस्य स्थलस्य प्राचीनतमं नाम किम्?

(उत्तराणि अष्टमे पृष्ठे)

## वैज्ञानिकान्वेषणस्य संशोधनस्य वस्तुस्थितेः च प्रपञ्चः

१. सूर्यमण्डले कति ग्रहाः सन्ति?
२. ग्रहेषु अतिविशालः ग्रहः कः?
३. अत्यल्पाकारकः ग्रहः कः?
४. सूर्यस्य समीपतमः ग्रहः कः?
५. सूर्यात् कतमं स्थानं भूमेः?
६. सौरमण्डले ग्रहेभ्यः ऋते अन्यत् किमपि अस्ति किम्?
७. अस्माभिः नेत्राभ्यां द्रष्टुं योग्यं प्रकाशमानं नक्षत्रं किम्?
८. कः ग्रहः गणितद्वारा अन्विष्टः?

(उत्तराणि अष्टमे पृष्ठे)




१. शतशः कथासु चित्रिता सा व्यक्तिः का, यया च बहूनि जन्मानि प्राप्तानि इति विश्वस्यते?
२. तादृशीनां कथानां सङ्ग्रहस्य नाम किम्?
३. भारतस्य तत् राज्यं किं, यस्मात् च परशुरामसम्बन्धिन्याः घटनायाः कारणतः समुद्रः अपसृतवान् इति विश्वस्यते?
४. अर्जुनस्य शङ्खस्य नाम किम्?
५. धेनूनां माता का?
६. भारतस्य कस्य देवालयस्य आराध्यदेवी अविवाहिता (कन्या) अस्ति?
७. तया देव्या यस्य राक्षसस्य संहारः कृतः, तस्य नाम किम्?
८. रावणस्य मारणसन्दर्भे रामेण उपयुक्तस्य धनुषः नाम किम्?
९. रावणेन उपयुक्तस्य खड्गस्य नाम किम्?
१०. स च खड्गः तस्मै केन दत्तः?

(उत्तराणि अष्टमे पृष्ठे)

## जानीम एकं शब्दं प्रमुखासु भारतीयभाषासु

"**पर्वतः**"

**अस्सामी**-पर्वत, **बेंगाली**-पर्वत, **इंग्लीष्**-मौण्टेन्, **गुजराती**-पर्वत, **हिन्दी**–पहाड, **कन्नड**-पर्वत, **काश्मीरी**-खोह्/पहाड, **मलयालम्**-पर्वतम्, **मराठी**-पर्वत, **ओडिया**-पर्वत, **पञ्जाबी**-पहाड, **सिन्धि**-जव्लु, **तमिळ**-मलै, **तेलुगु**-पर्वतमु, **उर्दु**-पहाड/खोह्।

# अपि भवान् विश्वसिति?

* यत् सुरूपचिकित्सा (प्लास्टिक् सर्जरी) आधुनिकविज्ञानस्य उपायनम् इति?
* यत् पक्षिणः पक्षचालनपूर्वकम् आकाशे तिष्ठन्ति इति?
* यत् तडितः आघातः एकस्मिन् स्थले पुनः न भविष्यति इति?

# न तथा

* भारतीयः वैद्यश्रेष्ठः क्रि.पू. ७-८ शतके स्थितः सुश्रुतः शल्यचिकित्सायाः तत्त्वम् आधारीकृत्य सुरूपचिकित्सां करोति स्म।
* पक्षिणः पक्षचालनं विना अपि आकाशे स्थातुम् अर्हन्ति।
* एकस्मिन् स्थले (स्मारके वा) तडितः आघातः द्विवारं किं, बहुवारं भवितुम् अर्हति।

# उत्तराणि

## सः कः स्यात्?

चाणक्यः (कौटिल्यः इति नामान्तरम्)
सः तरुणः तु चन्द्रगुप्तमौर्यः।

## इतिहासः

१. रू. १२००।
२. सुबर्न राय् चौधरी।
३. जाब् चर्नाक्।
४. कालीघाट्, गोविन्दपुरम्, सुतनाती इति।
५. मुम्बई।
६. पोर्चुगीसजनाः।
७. सेनानी अल्बुकर्क्। १५३४तमे वर्षे।
८. गुजरात्राजस्य सुल्तान् बहादुर शाहमहोदयेन सह सन्धिं कृत्वा।
९. मद्रासपतम्।
१०. इन्द्रप्रस्थम्।

## विज्ञानादयः

१. नव, भूमिम् अपि अविहाय।
२. गुरुः, सामान्यतः एतस्य व्यासः ८८,८४६ मैल परिमितः।
३. प्लुटो, एतस्य व्यासः १,७६० मैल् परिमितः।
४. बुधः।
५. तृतीयं स्थानम्।
६. असङ्ख्यानां लघुकायानां क्षुद्रग्रहाणां सरणिः एव अस्ति सौरमण्डले। तत्रापि विशिष्य गुरु-मङ्गलयोः सञ्चारमार्गे।
७. सिरियस् ए, शुनकनक्षत्रम् इति तस्य जनप्रियं नाम।
८. नेप्च्यून्ग्रहः।

## साहित्यादयः

१. बुद्धः।
२. जातककथा।
३. केरलम्।
४. देवदत्तः।
५. कामधेनुः। (सुरभिः, नन्दिनी वा)
६. कन्याकुमारी देवालयस्य।
७. बाणासुरः।
८. इन्द्रधनुः।
९. चन्द्रहासः।
१०. शिवेन।



# नेहरूकथा – २

जवहरलालनेहरू यदा दशवर्षीयः आसीत् तदा तदीयौ मातापितरौ नूतनतया निर्मिते 'आनन्दभवन'नामके भवने स्ववसतिं कृतवन्तौ। प्रासादतुल्यं सुविशालं भवनं, परमरमणीयं परिसरं च दृष्ट्वा बालः जवहरः अवर्णनीयम् आनन्दं प्राप्तवान्।

'आत्मना सह क्रीडार्थं भगिनी, भ्राता वा नास्ति' इत्येषा जवहरस्य व्यथा अपि अपगता। तेन भगिनी प्राप्ता आसीत्। वैद्यः जवहरम् एतां वार्तां निवेद्य सविनोदम् उक्तवान्– "भवतः भगिनी जाता अस्ति। सौभाग्यवशात् भागहरः भ्राता तु न" इति। 'एषः वैद्यः मां स्वार्थिनं भावयति खलु?' इति जवहरः नितरां खिन्नः कुपितः च।





मोतीलालः इंग्लेण्ड्देशं गत्वा प्रत्यागतवान्। 'श्रोत्रियेण समुद्रोल्लङ्घनं यत् कृतं तदर्थं प्रायश्चित्तं भवेत्' इति सम्प्रदायपराः उक्तवन्तः। मोतीलालः एतत् सर्वथा निराकृतवान्। अतः तदा एतद्विषये महान् वादविवादः एव प्रवृत्तः। एतेन जवहरः सम्यक् ज्ञातवान् यत् अन्धश्रद्धायाः प्रगतिपरबुद्धेः च कीदृशं घर्षणं प्रचलति इति।



एन्.टि. ब्रूक्स्नामकस्य आंग्लोपाध्यायस्य सकाशे जवहरस्य विद्याभ्यासः आरब्धः। "अलिसेस् अड्वेंचर्स्", "दि जंगल् बुक्", "डान् क्विक्सोट्" इत्यादिभिः आंग्लपुस्तकैः जवहरः नितराम् आकृष्टः अभवत्। तेषाम् अध्ययनतः सः कल्पनासाम्राज्ये विहर्तुं शक्तवान्। तदीया ऊहाशक्तिः एतेन प्रवृद्धा।

आत्मा भौतिकं शरीरं विहाय अदृश्यरूपेण इतस्ततः सञ्चरति इत्येतस्य तत्त्वस्य प्रतिपादकं "दिव्यज्ञानमतम्" अनुसरति स्म ब्रूक्। गुरुमुखात् एतादृशान् बहून् विषयान् तदा तदा शृणोति जवहरः। अतः सः रात्रौ स्वप्ने आत्मानं मेघानां मध्ये सञ्चरन्तं पश्यति स्म।





रशिया-जपान्देशयोः मध्ये प्रचलतः युद्धस्य वार्ता पत्रिकासु प्रकाश्यते स्म। ताः पठतः जवहरस्य मनसि राष्ट्रियभावनाः उद्गच्छन्ति। प्राचीनकालस्य सैनिकः इव खड्गं गृहीत्वा भारतस्य स्वातन्त्र्यार्थं युद्धं कुर्वतः आत्मनः चित्रं कल्पनालोके सृजन् सन्तोषम् अनुभवति जवहरः।

सप्तदशे वयसि सः मातापितृभ्यां सह इंग्लेण्डुदेशं गतवान्। लण्डन्नगरस्य प्राप्तेः अनन्तरदिने एव ते "डर्बीरिस्" (अश्वक्रीडां) द्रष्टुं गतवन्तः। तद्दिने जवहरः इंग्लेण्डुवासिनः बहून् भारतीयप्रमुखान् दृष्टवान्।





एतदनन्तरं सः अध्ययनार्थं हारोनगरं गतवान्। तत्र अपरिचितैः सह वासः आसीत् तस्य। आरम्भदिनेषु एकाकिता अनुभूयते स्म तेन। किन्तु अनन्तरकाले सः आत्मानं परिसरानुगुणं परिवर्तयन् क्रीडादिषु अपि आसक्तिं प्रदर्शितवान्।

१९०५तमे वर्षे इंग्लेण्डुनगरे निर्वाचनं प्रवृत्तम्। निर्वाचनस्य वार्ताः पत्रिकासु प्रकाश्यन्ते स्म। ताः वार्ताः आसक्त्या पठति स्म जवहरः। कदाचित् उपाध्यायः कक्ष्यायां निर्वाचनपरिणामविषये पृष्टवान्। तदा जवहरः एकः एव समीचीनम् उत्तरं दत्तवान्।





स्वदेशे प्रचलत् सङ्घटनाकार्यम् अपि आसक्त्या परिशीलयन् आसीत् जवहरः। तत्समये बङ्गाल-पञ्जाब-महाराष्ट्रादिषु प्रदेशेषु देशभक्ताः आंग्लशासनं विरुध्य युद्धं कुर्वन्तः आसन्। एतादृशं विषयम् अधिकृत्य सम्भाषणं चर्चां वा कर्तुं हारोनगरे कोऽपि न लभ्यते स्म जवहरेण।

कदाचित् शालाया जवहराय बलात् किमपि पुस्तकं दत्तम्। तत्र इटलीदेशीयस्य देशभक्तस्य विप्लवकारिणः गरिबाल्डिनामकस्य जीवनचरित्रम् आसीत्। तस्य महापुरुषस्य जीवनचरित्रस्य पठनेन जवहरः नितराम् उत्तेजितः जातः। तस्य मनसि इटलीदेशस्य भारतस्य च चरित्रं सदा आवर्तते।





मानसिकतया तीव्रं प्रवर्धमानस्य जवहरस्य कृते अल्पं हारोनगरम् अपर्याप्तं जातम्। 'केम्ब्रिज् गतं चेत् वरं स्यात्' इति पितरं पत्रद्वारा सूचितवान् जवहरः। मोतीलालः एतदर्थम् अनुमतिं दत्तवान्। वर्षद्वयात्मकं हारोनगरवासजीवनं समाप्य जवहरः केम्ब्रिज्नगरं प्रति प्रस्थितवान्।

–(अनुवर्तते)



# सतीशविवाहः

सवितृपुरे सतीशः नाम कश्चन सज्जनः तरुणः आसीत्। परम्पराप्राप्ता सम्पत्तिः आसीत् तस्य। स्वयम् अपि सः परिश्रमेण कार्यं कुर्वन् जीवनं यापयति। अतः तस्मै कन्यां दातुं बहवः कन्यापितरः सिद्धाः आसन्।

कदाचित् रुद्रेशः नाम वञ्चकः सवितृपुरम् आगतवान्। तेन सह काचित् कुरूपिणी तरुणी अपि आसीत्। सः सवितृपुरीयान् उद्दिश्य उक्तवान्– "एषा मम पुत्री। मासद्वयात् पूर्वं मम ग्रामम् आगतः एतद्ग्रामीणः सतीशो नाम तरुणः एतां परिणीय – 'अचिरात् एव आगत्य एतां नेष्यामि' इति उक्त्वा गतवान्। एतावत्पर्यन्तं मया तस्य प्रतीक्षा कृता। इदानीम् अहम् एव तम् अन्विष्यन् आगतवान् अस्मि।" इति।

एतां विचित्रां कथां श्रुत्वा बहवः प्रवर्तिष्यमाणस्य विषये कुतूहलिनः जाताः। अतः ते सर्वे रुद्रेशम् अनुसृतवन्तः। सतीशं दृष्ट्वा ते पृष्टवन्तः– "किम् एतत्?" इति।

"एषा का इति अहं न जानामि एव" इति उक्तवान् सतीशः।

"न जानामि इति सुलभतया वदति खलु? भवान् असत्यं वदेत्। किन्तु भवतः परिणयस्य साक्षिणः मद्ग्रामीणाः सत्यं प्रमाणीकरिष्यन्ति" इति उक्तवान् रुद्रेशः।

एतं वादविवादं श्रुत्वा कश्चित् उक्तवान्– "ग्रामाधिकारी एव अत्र योग्यं निर्णयं दातुम् अर्हति" इति। एतदनुगुणं सतीशः ग्रामाधिकारिणः समीपं गत्वा सर्वं निवेदितवान्।

'सतीशः सरलः, वञ्चनादिकं सर्वथा न जानाति' इति ग्रामाधिकारी जानाति एव। 'एतस्य रक्षणं कथम्' इति आलोचयन् सः "विवादं श्वः निर्णेष्यामि" इति उक्त्वा तान्



प्रेषितवान्।

अनन्तरदिने अन्यः कश्चित् कयाचित् कन्यया सह सवितृपुरम् आगत्य आत्मनः नाम गोपीनाथं वदन् तां सुन्दरीं तरुणीं प्रदर्शयन्– "मासचतुष्टयात् पूर्वं सतीशः मम ग्रामम् आगत्य एतां मम पुत्रीं परिणीतवान्" इति उक्तवान्।

"एतम्, एतस्य पुत्रीं वा अहं न दृष्टवान् एव" इति उक्तवान् सतीशः।

"भोः, एवं किमर्थं वदति? यदि भवान् इच्छति तर्हि लक्षरूप्यकाणि यौतकरूपेण दास्यामि। कृपया एतां मा निराकरोतु" इति उक्तवान् गोपीनाथः। तथापि सतीशः सर्वं निराकृतवान्। तदा गोपीनाथः सहजतया ग्रामाधिकारिणः समीपं गतवान्।

ग्रामाधिकारी सर्वं श्रुत्वा उक्तवान्– "रुद्रेशेन यथा उक्तं तथैव वदति भवान् अपि। किन्तु रुद्रेशः मासद्वयात् पूर्वं विवाहः जातः इति वदति चेत् भवान् वदति– मासचतुष्टयात् पूर्वम् इति। किन्तु भवान् सत्यम् एव उक्तवान् इत्यत्र कः विश्वासः?" इति।

"अहं साक्षिणः आनीय मम पक्षं समर्थयिष्यामि" इति उक्तवान् गोपीनाथः। रुद्रेशः अपि– "अहम् अपि साक्षिणः आनेष्यामि" इति उक्तवान्। कस्य वचनं सत्यम् इति तु न निर्णीतम्।

एतावता कश्चन मांसवणिक् कालेशः तत्र आगतवान्। सः रुद्रेशस्य पुत्रीं पश्यन् कोपेन उक्तवान्– "भोः, अत्र अस्ति वा भवती? मादृशस्य परिणयस्य अनन्तरं मृतप्राणिनां चर्मणः विदारणं करणीयं भविष्यति इति न जानाति स्म वा भवती? विवाहानन्तरम् एवं गृहात् पलायनं करोति चेत् कथम्? आगच्छतु गृहम्। गच्छाव तावत्" इति।

ग्रामाधिकारी आश्चर्येण पृष्टवान्– "एतां भवान् परिणीतवान् अस्ति वा?" इति।

"आं श्रीमन्! एषा मम पत्नी। विवाहं प्रमाणीकर्तुं साक्षिणः अपि मया सह आगताः सन्ति।" इति उक्तवान् कालेशः।

ग्रामाधिकारी तान् साक्षिणः अन्तः आहूतवान्। "अग्निसाक्षितया कालेशेन एषा परिणीता। एतत् प्रत्यक्षं दृष्टम् अस्माभिः"

इति उक्तवन्तः ते।

''अस्तु तावत्। साक्ष्याधारेण निर्णीतं भवति यत् रुद्रेशस्य पुत्री सतीशस्य पत्नी न इति'' इति उक्तवान् ग्रामाधिकारी।

''एते साक्षिणः असत्यवादिनः। अहम् एतस्य कालेशस्य पत्नी न। एतेन सह अहं न गमिष्यामि'' इति अश्रूणि स्रावयन्ती उक्तवती सा कुरूपिणी तरुणी।

''भवती एतेन कालेशेन मासद्वयात् पूर्वम् अग्निसाक्षितया परिणीता इत्येतम् अंशम् एते साक्षिणः प्रमाणीकृतवन्तः सन्ति। तेषाम् असत्यवादितायां प्रमाणं किमपि नास्ति। अतः भवत्या कालेशेन सहैव गन्तव्यम्'' इति उक्तवान् ग्रामाधिकारी।

एतत् श्रुत्वा सा कुरूपिणी रुदती उक्तवती– ''एषः रुद्रेशः न मम पिता, अपि तु मातुलः। सतीशस्य सरलतां जानन् सः तदीयायाः सम्पत्तेः वशीकरणार्थम् एवम् अभिनयन् अस्ति। वस्तुतः तु अहम् अविवाहिता कन्या। एषः माम् अत्र बलात् आनीतवान्। मां भाययित्वा मौनं स्थातुं सूचितवान्'' इति।

''समस्या परिहृता। गोपीनाथस्य पुत्री सतीशस्य पत्नी इत्येतत् सिद्धम्'' इति उक्तवान् ग्रामाधिकारी।

तदा सतीशः सदैन्यम् उक्तवान्– ''श्रीमन्! अहं सत्यम् एव वदामि। गोपीनाथस्य पुत्र्याः मम च कोऽपि सम्बन्धः नास्ति। मया काऽपि न परिणीता'' इति।

''अस्तु तावत्। भवतः वचनं सत्यम् इत्येव



भावयेम। एतत् वदतु– मम पुत्र्याः परिणये भवतः कोऽपि आक्षेपः अस्ति वा?" इति पृष्टवान् गोपीनाथः।

तदा सतीशः आश्चर्येण– "किं वक्तव्यम् इत्येव न जानामि। वस्तुतः अहम् एतत् सर्वं दृष्ट्वा हतबुद्धिः अस्मि" इति उक्तवान्।

"भोः, दिग्भ्रान्तिः मास्तु। अहं सर्वं वदामि" इति हसन् गोपीनाथः उक्तवान्– "अहं मम पुत्र्याः निमित्तं वरान्वेषणं कुर्वन् अस्मि। मुग्धा सा सुखेन जीवेत् इति मम आशयः। अनुरूपस्य वरस्य अन्वेषणं कुर्वन् अहं सतीशस्य भवतः नाम श्रुतवान्। यावत् अहं भवतः समीपं गन्तुम् उद्युक्तः तावता रुद्रेशस्य तन्त्रं मया ज्ञातम्। प्रतितन्त्रं कर्तुम् इच्छन् अहं मांसविक्रयिकस्य साहाय्यं प्रार्थितवान्" इति।

"एवं वा कथा? भवतः तन्त्रस्य कारणतः रुद्रेशस्य कुतन्त्रं विफलं जातम्। एतावता भवता किं प्राप्तम्?" इति पृष्टवान् ग्रामाधिकारी।

"वस्तुतः सतीशस्य सरलताविषये मया पूर्वं श्रुतम् आसीत्। तस्य व्यवहारे वञ्चना न भवति इति मया प्रत्यक्षं दृष्टम्। यदि अन्यः स्यात् तर्हि सुन्दरीं तरुणीं दृष्ट्वा मया दीयमानं धनं च श्रुत्वा 'मया एषा परिणीता इति एतत् सत्यम्' इति अवदिष्यत्। एषः असत्यं वक्तुं न इष्टवान्। एषः सतीशः मम पुत्रीं यदि परिणयेत् तर्हि मम पुत्री अपि सुखेन स्थास्यति, एषः अपि सुखेन जीविष्यति। ममापि निश्चिन्तता भविष्यति। अन्यच्च एतादृशान् सरलान् वञ्चकाः सुलभतया वञ्चयन्ति। समर्थस्य कस्यचित् साहाय्यं विना सरलाः जीवितुं न अर्हन्ति। मम पुत्री सतीशेन परिणीता चेत् अहं तस्य साहाय्यकत्वेन स्थास्यामि। मम सामर्थ्यं तु एतावता निरूपतम् अभवत् एव। इतःपरम् एतद्विषये सतीशः एव प्रमाणम्" इति हसन् उक्तवान् गोपीनाथः।

गोपीनाथस्य पुत्रीं परिणेतुं सन्तोषेण अङ्गीकारं सूचितवान् सतीशः।





# कृष्णावतारः

यादववीराः जरासन्धपक्षीयान् राज्ञः पराजित्य विजयोन्मादेन सन्तोषेण च सह बलरामसात्यकिप्रभृतीन् अनुसरन्तः द्वारकां प्रत्यागतवन्तः। कृष्णः अपि रुक्मिणीसमेतः निरातङ्कं द्वारकां प्राप्तवान्।

कृष्णेन मूर्च्छावस्थां प्रापितं रुक्मिणं स्वस्य रथस्य उपरि आरोप्य कुण्डिनपुरं प्रति प्रस्थितवान् श्रुतपर्वा।

अनुजां विना कुण्डिनपुरं न प्रविशामि इति प्रतिज्ञा कृता आसीत् खलु रुक्मिणा? अतः सः नगरप्रवेशं निराकृतवान्। अनतिदूरे भोजकटकं नाम नगरं निर्माय तत्रैव स्थितवान्।

सचेतनतां प्राप्तवान् जरासन्धः इतस्ततः विकीर्णां सेनाम् एकत्रीकृतवान्। उपहास्यतां गतं शिशुपालं धैर्यवचनानि उक्तवान् च। "योग्ये समये पुनः कदाचित् प्रतीकारं साधयिष्यामः" इति शिशुपालं सान्त्वयित्वा सः सैन्येन सह स्वदेशं गतवान्।

रुक्मिण्या सह आगतं कृष्णं दृष्ट्वा सन्तुष्टाः यादववृद्धाः विवाहमुहूर्तं निश्चितवन्तः। सर्वेभ्यः यादवबन्धुभ्यः आह्वानं प्रेषितम्। नगरं समग्रम् अलङ्कृतं जातम्। सर्वाः गृहभित्तयः सुधाभिः लिप्ताः। तत्र तत्र मणिमाणिक्यमयानि पुष्पमयानि, चित्रमयानि च तोरणानि निर्मितानि। वृषभादयः पुष्प-वर्णकादिभिः सम्यक् अलङ्कृताः। स्तम्भाः नूतनैः शिल्पैः समेताः नावीन्यं प्राप्तवन्तः। सुगन्धजलेन सर्वे मार्गाः क्षालिताः अभवन्। मणिकुट्टिमाः चाकचक्येन



प्रकाशमानाः जाताः। सर्वेषां गृहाणां पुरतः वर्णालङ्कृता रङ्गवल्ली लिखिता। आम्राश्वत्थादिपत्राणां तोरणानि सर्वेषां गृहाणां पुरतः निर्मितानि। गुच्छसहितानि कदलीसस्यानि तोरणपार्श्वे स्थापितानि। गृहाणाम् उपरि ध्वजाः उड्डायिताः। एवं समग्रं द्वारकानगरं विवाहमण्डपः इव जातम्।

आमन्त्रिताः सर्वे राजानः स्ववैभवं प्रकाशयन्तः अश्व-रथ-गजादिभिः सह द्वारकाम् आगतवन्तः। नेत्रोत्सवं प्राप्तुम् इच्छन्तः बहवः ऋषिमुनयः अपि द्वारकाम् आगतवन्तः। सर्वेभ्यः देशेभ्यः चतुर्णां वर्णानां प्रमुखाः समागताः। आगतान् सर्वान् सादरं सत्कृत्य तत्तद्योग्यतानुगुणं वसतिव्यवस्थाम् उपकल्पितवान् सात्यकिः। कस्यापि काऽपि न्यूनता यथा न स्यात् तथा व्यवस्था कृता आसीत् तेन।

विवाहदिनम् आसन्नम्। राजप्रासादे वेदज्ञाः ब्राह्मणाः एकत्र वेदमन्त्रान् उच्चारयन्ति। अपरत्र वन्दिपुरुषाः जयवचनानि वदन्ति। अन्यत्र मङ्गल-वाद्यरवः श्रूयते। इतस्ततः त्वरया सञ्चरन्तीनां स्त्रीणां पट्टवस्त्रशब्दः आभरणशब्दः च इतरत्र श्रूयते। भेरीकाहलादीनां ध्वनिः, गजानां घीङ्कारः च पुनः कुत्रचित् श्रूयते। एते सर्वे ध्वनयः विवाहस्य वैभवं सुदूरात् एव ज्ञापयन्ति स्म।

चतुर्भिः महाकारकैः सुवर्णस्तम्भैः विवाहमण्डपः आरचितः आसीत्। माणिक्यैः, मणिमालया, पुष्पैः च स च मण्डपः सम्यक् अलङ्कृतः आसीत्।

मङ्गलसूचकानां रङ्गवल्लीरेखाणां मध्ये मणिमये पीठे वरः कृष्णः उपविष्टः आसीत्। वसुदेवः, उग्रसेनः, बलरामः, अन्ये यादववृद्धाः, मुनयः च कृष्णं परितः मण्डलाकारेण उपविष्टवन्तः आसन्।

पुरोहितः होमकुण्डस्य पार्श्वे उपविश्य मन्त्रोच्चारणं कुर्वन् आज्यादिभिः आहुतिभिः अग्निदेवं तर्पयन् आसीत्।

विवाहसुमूहूर्तः आसन्नः। सौकुमार्यस्य, सौन्दर्यस्य, सौभाग्यस्य, सौशील्यस्य च मूर्तिमत्स्वरूपायाः रुक्मिणीदेव्याः पाणिं

कृष्णः गृहीतवान्।

उपस्थिताः सर्वे मन्त्राक्षतैः शुभाशंसनं कृतवन्तः। सुमङ्गल्यः विवाहगीतैः वधूवरौ अनुगृहीतवत्यः। देवाः देवतास्त्रियः च आकाशात् अक्षतान् पातितवन्तः। मुनयः अपि समृद्धं कौटुम्बिकजीवनम् आशंसितवन्तः।

सपत्नीकः कृष्णः मातरं, पितरं, ज्येष्ठान् च नमस्कृतवान्। रुक्मिणी तम् अनुसृतवती। ज्येष्ठानां कुलवृद्धानाम् आशीर्वादं प्राप्य कृष्णः ब्राह्मणेभ्यः अष्टसहस्रं रथान्, सार्धैकादशसहस्रं गजान्, अगणितान् अश्वान्, सुवर्णाभरणानि, रजतपात्राणि, धनानि च दानरूपेण दत्तवान्। सूतेभ्यः, वन्दिभ्यः, सेवकेभ्यः, नर्तकेभ्यः च धनं वस्त्रं च यथेष्टं दत्तवान्।

सर्वे तृप्त्या उद्गिरणं यथा प्रकटयेयुः तथा भूरिभोजनं व्यवस्थापितम्। सर्वे राजानः वधूवरयोः अमूल्यानि उपायनानि दत्त्वा स्वयोग्यतानुगुणम् उपायनं च प्राप्य स्वदेशं प्रतिगतवन्तः।

अनन्तरं कृष्णः रुक्मिण्या सह दाम्पत्यजीवनं यापयन् मित्रविन्दां, जाम्बवतीं, सत्यभामां, कालिन्दीं, सत्यां च क्रमशः परिणीतवान्।

कृष्णस्य ज्येष्ठा पत्नी कालक्रमेण गर्भिणी जाता। पुंसवनसीमन्तादिसंस्काराः यथाविधि सम्पन्नाः। योग्ये दिने रुक्मिणी पुत्रं प्रसूतवती।

पूर्वं शिवस्य नेत्राग्निना दग्धः मन्मथः एव





इदानीं रुक्मिण्यां जातः आसीत्। तस्य नाम प्रद्युम्नः इति निश्चितम्।

रुक्मिण्यां पुत्रः जातः इति वार्तां श्रुत्वा शम्बरासुरः दिग्भ्रान्तः। यतः रुक्मिण्याः पुत्रात् स्वस्य मरणं भविष्यति इति सः जानाति स्म। अतः सः रुक्मिण्याः पार्श्वे सुप्तं सप्तदिवसीयं पुत्रं मध्यरात्रसमये मायया अपहृत्य समुद्रे क्षिप्तवान्। मम मरणभीतिः अपगता इति सन्तोषेण सः प्रासादं प्रतिगतवान्।

किन्तु शम्बरासुरेण समुद्रे क्षिप्तं शिशुं प्रद्युम्नं कश्चन मीनः अगिलत्। स च मीनः केनचित् धीवरेण गृहीतः। महाकारकं मीनं दृष्ट्वा सन्तुष्टः सः धीवरः तं मीनं महाराज्ञ्यै मायावत्यै उपायनरूपेण समर्पितवान्।

सः धीवरः इक्षुमतीपुरीयः। इक्षुमतीपुरं शम्बरासुरस्य अधीनम् आसीत्। तद्देशस्य राजकुमारीं मायावतीं परिणेतुम् इच्छति स्म शम्बरासुरः।

धीवरेण उपायनीकृतस्य मीनस्य शरीरकान्तिं दृष्ट्वा सन्तुष्टा मायावती तस्मात् मीनात् शिशुं प्राप्तवती। शिशोः प्रद्युम्नस्य सौन्दर्येण हावभावेन च सा आकृष्टा अभवत्। तं शिशुं प्रीत्या पोषयितुं सङ्कल्पितवती मायावती। सा तस्य पूर्ववृत्तान्तं जानाति स्म। "एषः कः शिशुः?" इति पृष्टवन्तं शम्बरासुरम् उक्तवती सा— "शाकविक्रयिकेण आनीय दत्तः एषः। मम व्रतपूजार्थम् एतादृशः एव शिशुः मया अपेक्ष्यते स्म। भवन्तं परिणीय एतादृशस्य एव पुत्रस्य प्राप्त्यर्थम् आचर्यमाणम् अस्ति एतत् व्रतम्" इति। शम्बरासुरस्य अपि सः शिशुः प्रियः जातः।

एवं राक्षसगृहे प्रवर्धमानः प्रद्युम्नः राक्षसमायाः सर्वाः ज्ञातवान्। मायाविद्यायां निपुणः जातः सः। तस्य सौन्दर्यम् अपि अपूर्वम् आसीत्। मन्मथस्य एव अवतारभूतः सः इत्यतः तादृशं सौन्दर्यं तस्य सहजम् एव खलु? मातृवत् तं पालितवती मायावती एव तस्मिन् अनुरक्ता जाता। "मां परिणयतु" इति तं प्रार्थितवती सा।

तदा प्रद्युम्नः उक्तवान्— "भवती मम


Sankar



माता। अहं च पुत्रः। एवं स्थिते मयि अनुरागः भवत्याः कथम्? अत्र किमपि अन्यत् कारणं स्यात्। यदि भवती जानाति तर्हि वदतु तावत्'' इति।

तदा मायावती उक्तवती— ''भवतः पिता यादवकुलतिलकः कृष्णः। माता च रुक्मिणीदेवी। जातमात्रं शिशुं भवन्तं शम्बरासुरः समुद्रे क्षिप्तवान्। ततः मीनस्य उदरे स्थितं भवन्तम् अहं पोषितवती। विचित्रा दैवगतिः। प्रायः पूर्वस्मिन् जन्मनि अहं भवतः पत्नी आसम् इति मन्ये। भवतः माता भवन्तम् एव ध्यायन्ती दुःखिता अस्ति। भवान् गत्वा तां सान्त्वयतु। मां कृपया मा निराकरोतु। अहं शम्बरासुरस्य वधूः न। सः मम इच्छां विरुध्य माम् अत्र बलात् आनीतवान्। व्रतव्याजेन विवाहं निराकुर्वती प्रीतिम् अभिनयन्ती च कथञ्चित् दिनानि यापयन्ती अस्मि। सः मम भवतः च विरोधी। प्रथमं तं मारयतु। भवान् एव तस्य संहारकः इति विधिनिश्चयः अस्ति'' इति।

''भवत्याः वचनं सत्यम् एव स्यात्। जनानां हितार्थम् एव ब्रह्मा पूर्वजन्मनः विस्मरणं कल्पितवान् स्यात्। मह्यम् अपि शम्बरस्य व्यवहारः सर्वथा न रोचते। यथा भवत्या सूचितं तथैव तं मारयिष्यामि'' इति उक्त्वा प्रद्युम्नः शम्बरसमीपं गत्वा तं युद्धार्थम् आहूतवान्।

''स्वप्राणरक्षणार्थं शिशुं समुद्रे क्षिप्तवन्तं प्रतिकंसः इव स्थितं भवन्तं मारयितुम् एव अहं भवतः गृहे प्रवृद्धः अस्मि'' इति वदन् तं कोपितवान्। शम्बरः कोपेन प्रद्युम्नस्य उपरि आक्रमणं कृतवान्। प्रद्युम्नः तस्य उपरि सप्त मायाः क्रमशः प्रयुज्य अष्टम्या मायया तं मारितवान्।

अनन्तरं प्रद्युम्नः मायावत्या सह मायाशक्त्या आकाशमार्गेण गच्छन् द्वारकायां कृष्णस्य अन्तःपुरे अवतीर्णवान्। अकस्मात् अवतीर्णौ मायावती-प्रद्युम्नौ दृष्ट्वा अन्तःपुरस्त्रियः भीताः। तावता प्रद्युम्नस्य सौन्दर्यातिशयं दृष्ट्वा ताः सर्वाः सन्तुष्टाः च।

'मम पुत्रः जीवितः यदि स्यात् तर्हि सोऽपि

एवम् एव अभविष्यत्' इति वदन्ती रुक्मिणी अश्रूणि स्रावितवती। परीक्ष्य दर्शनेन कृष्णस्य साम्यं तस्मिन् तरुणे विशेषतः दृष्टम्। 'कुत्रापि प्रवृद्धः मम पुत्रः एव इदानीम् एवम् उपस्थितः स्यात् वा?' इति भावना अपि आगता। कृष्णः तु तं तदेकदृष्ट्या पश्यन् अस्ति।

तस्मिन् समये नारदः नारायणनाम स्मरन् तत्र आगतवान्। सः कृष्णं प्रद्युम्नस्य इतिवृत्तम् उक्तवान्। तेन सर्वेषां सन्देहाः अपगताः। मायावती पूर्वजन्मनि रतिदेवी आसीत् इति विषयं दृढीकृतवान् नारदः। अतः अस्मिन् जन्मनि सा मन्मथस्य अवतारभूतं प्रद्युम्नम् एव परिणीतवती। पूर्वजन्मनः संस्कारवशात् सा अजानती अपि प्रद्युम्ने अनुरागवती जाता आसीत्। रतिदेवी सा शम्बरासुरं मायया वञ्चयन्ती पातिव्रत्यं रक्षितवती आसीत्।

पुत्रस्य पुनः प्राप्त्या रुक्मिणी नितरां सन्तुष्टा। कृष्णस्य अन्याः पत्न्यः अपि एतेन सन्तुष्टाः अभवन्। एतन्निमित्तम् अन्तःपुरे भोजनकूटः, उत्सवः च प्रवृत्तः।

प्रद्युम्नस्य प्रसूत्यनन्तरं रुक्मिण्या पुनरपि नव पुत्राः एका पुत्री च प्रसूताः। तेषां पुत्राणां नामानि – चारुघोषः, सुधेष्णः, सुषेणः, चारुगुप्तः, चारुवाहनः, चारुविन्दः, चारुभद्रः, चारुगर्भः, चारुः च इति। पुत्र्याश्च नाम चारुमती इति। एवम् एव



कृष्णस्य इतराभ्यः पत्नीभ्यः चारुबिन्दः, सङ्ग्रामवेत्ता, दीप्तिमान्, वृकः इत्यादयः पुत्राः मित्रविन्दाद्याः अनेकाः पुत्र्यः च जाताः। एवं कृष्णस्य परिवारः प्रवृद्धः।

प्रद्युम्नस्य जन्मनः अनन्तरं मासाभ्यन्तरे जाम्बवती साम्बनामकं पुत्रं प्रसूतवती। तं बाल्यतः अपि आत्मना सह स्थापयन् बलरामः पुत्रप्रीत्या पोषयन् स्वसमानं कीर्तिवन्तं कृतवान्। अनेकाः युद्धविद्याः तं पाठितवान्।

बलरामस्य पत्नी रेवती निशातः, उल्मुकः इति द्वौ पुत्रौ प्रसूतवती। एवं बलरामस्य अपि परिवारः प्रवृद्धः।

विदर्भदेशस्य राज्ञः रुक्मिण्याः अग्रजस्य रुक्मिणः शुभाङ्गी नाम काचित् पुत्री

आसीत्। सा प्राप्तवयस्का जाता। रुक्मिराजः तस्याः स्वयंवरं निश्चित्य सर्वेभ्यः राजभ्यः आह्वानं प्रेषितवान्। अनेके राजानः स्वयंवरार्थम् आगतवन्तः। प्रद्युम्नः अपि मातापित्रोः अनुज्ञां स्वीकृत्य सपरिवारं स्वयंवरार्थं गतवान्। शुभाङ्गी तु पूर्वम् एव प्रद्युम्नस्य सौन्दर्यातिशयं श्रुतवती आसीत्। तस्मिन् अनुरक्ता आसीत् अपि। अतः स्वयंवरमण्डपे तं दृष्ट्वा सन्तोषेण तस्य कण्ठे मालां स्थापितवती।

'योग्यं पतिम् एव वृतवती सा' इति सर्वे राजानः तस्याः श्लाघनं कृतवन्तः। उपस्थिताः सर्वे शुभाङ्गी-प्रद्युम्नौ आशिषा अनुगृहीतवन्तः।

शुभाङ्ग्या सह प्रद्युम्नः द्वारकां प्रत्यागतवान्। तयोः दम्पत्योः अनिरुद्धः नाम पुत्रः जातः। अनिरुद्धः सर्वाणि शास्त्राणि, सर्वाः शस्त्रविद्याः च अधीत्य प्राप्तवयस्कः जातः।

रुक्मिणः पुत्रस्य रुक्मवती नाम पुत्री आसीत्। रुक्मिणः पौत्री रुक्मवती अनिरुद्धस्य पत्नी भवति चेत् वरम् इति सूचितवान् कृष्णः। एतदनुगुणं कन्याप्रार्थनार्थं प्रद्युम्नः रुक्मिणं प्रति दूतं प्रेषितवान्।

रुक्मी पूर्वतनं वैरं विस्मृत्य अनिरुद्धाय रुक्मवतीं दातुम् अङ्गीकृतवान्। अतः तयोः विवाहमुहूर्तः निश्चितः।

विवाहार्थं बलरामः, कृष्णः, प्रद्युम्नः इत्यादयः गतवन्तः। रुक्मिणी अपि विवाहे उपस्थिता आसीत् एव। विवाहः तु सवैभवं प्रवृत्तः।

विवाहमहोत्सवदिने रुक्मिपक्षीयाः वेणुधारी, श्रुतपर्वा, अंशुमान्, जयत्सेनः इत्यादयः दाक्षिणात्याः– "भोः, भवान् द्यूते समर्थः खलु? बलरामस्य अपि द्यूते विशेषरुचिः। अतः तं द्यूतार्थम् आह्वयतु। तं भवान् जेतुं शक्नोति चेत् भवतः कीर्तिः वर्धते। प्रयत्नं करोतु" इति बहुधा बोधयन्तः रुक्मिणः मनसि चाञ्चल्यम् उत्पादितवन्तः।






# वृकमानवः

फ्रान्सदेशे पूर्वं किञ्चन अरण्यम् आसीत्, यत्र च इदानीं पूर्णतः रिक्तता दृश्यते। तच्च अरण्यम् अग्निना दग्धम् इति श्रूयते। सा घटना एवम् अस्ति—

अरण्यस्य प्रान्ते कश्चन निर्धनः कृषिकः पत्न्या सह निवसति स्म। सः कदाचित् कुतश्चित् विशालं रोटिकाद्वयं सम्पाद्य अरण्यमार्गेण गृहं प्रत्यागच्छन् आसीत्। तदा कश्चन महावृकः वृक्षसमूहात् निर्गत्य तस्य सम्मुखम् अतिष्ठत्।

सः वृकः अतीव कृशः आसीत्। गुहासदृशं स्वकीयं मुखं विशालं व्यादाय आशापूर्णया दृष्ट्या कृषिकं पश्यन् सः गुर्गुरायमाणः आसीत्। तस्य तीक्ष्णाः दंष्ट्राः भयं जनयन्ति स्म। कृषिकः अकस्मात् उपस्थितं तं वृकं दृष्ट्वा नितरां भीतः। ततः पलायनं कर्तुं तस्य पादयोः शक्तिः न आसीत्। वृकस्य मारणं वा दूरप्रेषणं वा असाध्यम् एव आसीत्।

तावता कश्चन उपायः तस्य मनसि स्फुरितः। "भोः वृकराज! महती बुभुक्षा वा भवतः? एतं रोटिकाखण्डं खादतु तावत्" इति वदन् सः कृषिकः रोटिकाखण्डम् एकं तस्य वृकस्य पुरतः पातितवान्। वृकः रोटिकाखण्डस्य खादने उद्युक्तः जातः। तत्समये कृषिकः मन्दं ततः निर्गतवान्।

किञ्चिद्दूरं गमनानन्तरं तेन अनुभूतं यत् वृकः माम् अनुसरन् अस्ति इति। सः परिवृत्य वृकं पश्यन्— "भोः वृकमहाशय! अन्यं रोटिकाखण्डं स्वीकरोतु" इति उक्त्वा रोटिकायाः कञ्चन भागं वृकस्य पुरतः पातयित्वा ततः वेगेन धावितवान्।

किन्तु वृकः कृषिकस्य अनुसरणं न अत्यजत्। कृषिकः तु तदा तदा

"फ्रान्सदेशीया जानपदकथा"



रोटिकाखण्डं वृकस्य पुरतः पातयन् अग्रे धावति। वृकः तु क्षणमात्रेण रोटिकाखण्डं खादित्वा कृषिकम् अनुसरति। कृषिकस्य वेगस्य अपेक्षया वृकस्य वेगः एव अधिकः भवति स्म।

एवं धावन् कष्टेन श्वासोच्छ्वासं कुर्वन् कृषिकः यावत् स्वगृहं प्राप्तवान् तदा तस्य हस्ते एकः एव रोटिकाखण्डः अवशिष्टः आसीत्। अनुसृत्य आगतः वृकः तस्य गृहस्य पुरतः एव उपाविशत्।

रिक्तहस्तेन प्रत्यागतवन्तं पतिं दृष्ट्वा तदीया पत्नी उक्तवती– "किम् एतत्? रोटिकाः कुत्र? रोटिकया सह सेवनार्थं मया यवागूः सज्जीकृता अस्ति" इति।

कृषिकस्य तु शोचनीया अवस्था। सः कष्टेन श्वासोच्छ्वासं कुर्वन् किमपि वक्तुम् अशक्नुवन् वृकम् अङ्गुल्या प्रदर्शितवान्।

"हा हन्त! वृकः! अतः एव वा एतावता वेगेन धावन् आगतवान् भवान्? देवो दयालुः! भवान् वृकेण न खादितः इति तु सौभाग्यम्" इति उक्तवती पत्नी।

"आवयोः भोजनार्थम् आनीतं रोटिकाद्वयं खण्डशः एतस्मै वृकाय अर्पितवान्। अतः एव सजीवम् आगतवान्" इति उक्तवान् कृषिकः।

"किम्? रोटिकाद्वयम् अपि एतेन वृकेण गिलितं वा? महाधूर्तः एषः। आगच्छतु अन्तः। द्वारपिधानं करवाव। अन्यथा आवां गिलेत् सः" इति उक्तवती कृषिकपत्नी।

कृषिकः स्वहस्ते स्थितम् अन्तिमं रोटिकाखण्डम् अपि वृकस्य पुरतः पातयित्वा– "वृकराज! एतदपि भवान् एव खादतु नाम" इति उक्त्वा अन्तः गत्वा द्वारम् अर्गलेन कीलितवान्।

वृकः कृषिकेण दत्तं रोटिकाखण्डं खादित्वा बहुकालपर्यन्तं तस्य गृहस्य पुरतः एव उपाविशत्।

कृषिकदम्पती अन्तः उपविश्य केवलं यवागूम् एव सेवितवन्तौ। प्रतिकवलं कृषिकपत्नी वृकं बहुधा निन्दति स्म। दम्पत्योः सम्भाषणं यदा स्थगितं तदा वृकः मन्दम् उत्थाय अरण्यमार्गम् अनुसृत्य अगच्छत्। वृकस्य निर्गमनं ज्ञात्वा तौ



कृषिकदम्पती समाधानेन निःश्वसितवन्तौ।

अनन्तरं केचन मासाः अतीताः। तौ कृषिकदम्पती परिश्रमेण कार्यं कुर्वन्तौ किञ्चित् धनं सञ्चितवन्तौ। तेन सञ्चितेन धनेन काचित् धेनुः क्रेतव्या इति तयोः विचारः आसीत्।

एतदनुगुणं कृषिकः धनं स्वीकृत्य विपणिं प्रति प्रस्थितवान्। तेन अरण्यमार्गेण गन्तव्यम् आसीत्। सः अरण्यम् अतिक्रम्य विपणिं गतवान्। 'मम समीपे यावत् धनम् अस्ति तेन कीदृशी धेनुः लभ्येत? सा धेनुः कियत्पर्यन्तं क्षीरं दद्यात्? सद्यःप्रसूतायाः मूल्यं कियत् स्यात्?' इत्येवं चिन्तयन् सः इतस्ततः पश्यन् आसीत्। तावता कश्चन कृशः उन्नतः पुरुषः तस्य समीपम् आगत्य पृष्टवान्– "धेनुं क्रेतुम् इच्छति वा भवान्?" इति।

"आम्। सामान्या काचित् धेनुः क्रेतव्या। उत्तमां धेनुं क्रेतुं मम समीपे धनं नास्ति" इति उक्तवान् कृषिकः।

"मम गोष्ठे बह्व्यः धेनवः सन्ति। ततः भवान् अपेक्षितां धेनुं नेतुम् अर्हति" इति उक्तवान् सः पुरुषः।

कृषिकः तेन पुरुषेण सह तदीयं गृहं गतवान्। गृहस्य पृष्ठतः गोष्ठम् आसीत्।

तत्रत्याः धेनूः प्रदर्शयन् उक्तवान् सः पुरुषः– " उत्तमां धेनुं चिनोतु" इति।

कृषिकः स्वमत्यनुगुणम् एकाम् उत्तमां धेनुं चितवान्। तदा सः पुरुषः शिरः चालयन्– "उत्तमा धेनुः एव चिता भवता। एतां नयतु। धनं किमपि दातव्यं नास्ति" इति उक्त्वा धेनोः कण्ठे बद्धायाः रज्ज्वाः अन्तं कृषिकस्य हस्ते स्थापितवान्।

अनन्तरं सः पुरुषः स्वस्य कोषतः एकं करण्डकं बहिः आनीय– "एतत् उपायनं भवतः पत्न्यै। अत्र किम् अस्ति इति सा एव पश्यतु। यदा सा एकाकिनी भवति तदा एव द्रष्टव्यं तया" इति उक्तवान्।

कृषिकः आश्चर्येण तं करण्डकं स्वीकृत्य– "आवयोः विषये भवतः एतादृशी कृपा किमर्थम्?" इति पृष्टवान्।

तदा सः पुरुषः हसन् उक्तवान्– "पूर्वं कदाचित् भवान् रोटिकाखण्डैः वृकस्य

बुभुक्षां निवारितवान् खलु? सः वृकः अहम् एव। शठं प्रति शाठ्यं, सुजनं प्रति सौजन्यम् इति एषा मम नीतिः। अस्तु, इदानीं भवान् गच्छतु। देवः भवन्तम् अनुगृह्णातु'' इति।

एतत् श्रुत्वा कृषिकः सन्तोषम् आश्चर्यं चापि अनुभवन् धेन्वा सह स्वगृहं प्रति प्रस्थितवान्।

'करण्डकस्य अन्तः किं स्यात्?' इति। कृषिकस्य कुतूहलं क्षणे क्षणे वर्धते। सः करण्डकम् इतस्ततः परिवर्त्य पश्यति। अन्तः किम् अस्ति इति तेन सर्वथा न ज्ञातम्।

'मम पत्नी मत्समाना एव। आवयोः मध्ये भेदः नास्ति। करण्डकः मया उद्घाटितः चेत् तया उद्घाटितः इव। अतः अहम् एव करण्डकम् उद्घाटयामि' इति आलोचितवान् कृषिकः।

सः धेनुं चरणार्थं त्यक्त्वा वृक्षस्य अधः उपविश्य करण्डकस्य आवरणम् अपसारितवान्। तावता करण्डकात् अग्निज्वाला उद्गता। भीतः कृषिकः करण्डकम् अधः पातितवान्। तथापि तया ज्वालया पार्श्वस्थे वृक्षे अग्निः लग्नः एव।

''हा हन्त! मम पत्न्या एषः करण्डकः यदि उद्घाटितः स्यात् तर्हि तस्याः शरीरं मुखं च दग्धम् अभविष्यत्। तद्दिने सा यवागूं पिबन्ती तं वृकं निन्दितवती आसीत्। अतः एव सः वृकमानवः प्रतीकारसाधनार्थम् एवं कृतवान्। दैवेन प्रेरितः अहम् एतं करण्डकम् उद्घाटितवान्। अतः अनर्थः न सम्पन्नः'' इति आलोचितवान् कृषिकः।

वृक्षः सशब्दं ज्वलन् आसीत्। कृषिकः तु धेन्वा सह वेगेन गृहं गतवान्। वृक्षस्थः अग्निः एव वायुना प्रेरितः सन् दावानलः भूत्वा समग्रम् अरण्यम् अदहत्।

उत्तमधेनुप्राप्त्या सन्तुष्टः कृषिकः पत्न्या सह सुखेन जीवनं यापितवान्। वृकमानवः अनन्तरं तेन कदापि न दृष्टः।





# चतुरा गृहिणी

महेशः नाम युवकः नगरे सर्वकारीय-कार्यालये उद्योगे आसीत्। सः वीणावतीं परिणीतवान्। पत्न्या सह नूतने भाटकगृहे वसतिम् आरब्धवान् च। नगरे मध्यभागे भाटकम् अधिकं दातव्यं भवति इत्यतः नगरसीमायां स्थिते भाटकगृहे निवसति सः।

कदाचित् महेशः गृहस्य पुरतः उपविश्य किमपि कार्यं कुर्वन् आसीत्। वीणावती अपि पाकशालायां कार्ये मग्ना आसीत्। तदा कश्चित् आगत्य– "कुशलिनी खलु भगिनी? गृहं तृप्तिकरम् अस्ति खलु?" इति वदन् गृहस्य अन्तः आगतवान्।

"वस्तूनि इतोऽपि सुव्यवस्थितं न स्थापितानि इति भाति खलु?" इति वदन्ती अन्या काचित् अन्तः आगतवती।

महेशः अन्तः आगत्य एषः जनार्दनः, एषा जानकी इति परिचयं कारयित्वा उक्तवान्– "एतयोः गृहम् इतः समीपे एव अस्ति। एतौ परोपकारशीलौ" इति।

अनन्तरं तौ साहाय्यं कर्तुम् उद्युक्तौ जातौ। जनार्दनः महेशस्य साहाय्यं कृतवान् चेत् जानकी वीणावत्याः साहाय्यं कृतवती। अनन्तरं सम्भाषणं कुर्वन्तः ते चत्वारः अपि भोजनं समापितवन्तः। सायङ्कालपर्यन्तं स्थित्वा जनार्दनः जानकी च प्रतिगतवन्तौ।

"आवाभ्याम् एव सर्वं करणीयं चेत् चत्वारि दिनानि अपेक्षितानि अभविष्यन्। तयोः साहाय्यतः सर्वम् एकदिनाभ्यन्तरे सम्पन्नम्" इति सन्तोषेण उक्तवती वीणावती।

किन्तु एषः सन्तोषः चिरकालं न स्थितः। यतः पाकादिकार्यं समाप्य पतिं कार्यालयं सम्प्रेष्य वीणावती यावत् उपविशति तावता जानकी तत्र आगच्छति, वार्तालापं करोति च।

भोजनसमये अपि सा तत्रैव उपविशति। अन्यस्याः उपस्थितौ तां विना भोजनं न उचितं खलु? अतः वीणावती जानकीम् अपि भोजनार्थम् आह्वयति। सायङ्कालपर्यन्तं जानक्या उच्यमानाः असम्बद्धाः सर्वे विषयाः अनिवार्यतया श्रोतव्याः भवन्ति वीणावत्या। भोजनानन्तरं लघुनिद्रां कर्तुम् अपि अवकाशं न प्राप्नोति सा।

सायङ्काले महेशः यदा गृहं प्रत्यागच्छति तदा जनार्दनः आगत्य सुखेन आनन्दे उपविशति। महेशस्य इव जनार्दनाय अपि उपाहारः पानीयं च दातव्यं भवति। एवं रात्रिपर्यन्तं तयोः पीडा प्रचलति एव।

कानिचन दिनानि यावत् एतां पीडां मौनं सोढवती वीणावती। अन्ते सा खेदेन पतिम् उक्तवती – "एतौ दम्पती पिशाचौ इव आवां पीडयतः खलु? एतयोः कारणतः एकान्ते वार्तालापः, विहारः इत्यादिकं सर्वं च्युतं जातम्" इति।

पत्न्याः वचनं श्रुत्वा मन्दहासं प्रकटयन् मौनं स्थितवान् महेशः।

"श्वः यदा जनार्दनः जानकी च आगच्छतः तदा आवां मन्दिरं गच्छावः इति उक्त्वा इतः निर्गच्छाव" इति पतिम् उक्तवती वीणावती।

"एतत् किम् उचितं भवेत्?" इति पृष्टवान् महेशः।

पतिः एतादृशम् उपायं न अङ्गीकरोति इति ज्ञातवती वीणावती। अतः स्वयम् एव किमपि करणीयम् इति निश्चितवती सा।

सप्ताहानन्तरं जनार्दनः कार्यनिमित्तम्



अन्यं ग्रामं गन्तुम् उद्युक्तः। सः महेशं दृष्ट्वा– "भोः, अहं दिनद्वयाभ्यन्तरे प्रत्यागमिष्यामि। मम पत्नी इदानीम् अस्वस्था। अतः मम प्रत्यागमनात् पूर्वं सा यदि किमपि आवश्यकम् इति वदेत् तर्हि आनीय ददातु" इति उक्त्वा ततः निर्गतवान्।

अनन्तरदिने कार्यालयगमनात् पूर्वं महेशः जनार्दनस्य गृहं गतवान्। तत्र जानकी एकाम् आवलीं यच्छन्ती उक्तवती– "अग्रज! कार्यालयतः आगमनसमये एतानि वस्तूनि आनयतु" इति।

सायं महेशः तानि वस्तूनि क्रीत्वा आनीय दत्तवान्। तदर्थं द्विशतं रूप्यकाणि व्ययितानि तेन। जनार्दनस्य प्रत्यागमनानन्तरं दश दिनानि अतीतानि चेदपि एतस्य धनस्य प्रत्यर्पणप्रस्तावः एव न दृष्टः।

अतः वीणावती स्वगृहम् आगतां जानकीम् उक्तवती– "वस्तूनां निमित्तं व्ययितानि द्विशतं रूप्यकाणि न आगतानि। कृपया पतिं स्मारयतु" इति।

तदा आश्चर्यं प्रकटयन्ती जानकी उक्तवती– "तावताम् अल्पप्रमाणकानां वस्तूनां कृते द्विशतं रूप्यकाणि! आश्चर्यम् एतत्! मम पतिः तावन्ति वस्तूनि शतरूप्यकैः आनयेत्। भवत्याः पतिः क्रयणम् एव न जानाति" इति।

एतत् श्रुतवत्याः वीणावत्याः महान् कोपः आगतः। तथापि सा मौनं स्थितवती।

दिनद्वयानन्तरं कार्यालयकार्यनिमित्तं महेशेन ग्रामान्तरं गन्तव्यम् आपतितम्।





तस्य गमनदिने वीणावती तम् उक्तवती— "भवतः प्रत्यागनार्थं दिनत्रयम् आवश्यकं खलु? जनार्दनस्य हस्ते शतं रूप्यकाणि स्थापयित्वा अस्माक गृहार्थं किमपि आवश्यकं भवेत् चेत् आनीय दातुं सूचयित्वा गच्छतु" इति।

तत् श्रुत्वा महेशः असमाधानेन उक्तवान्— "भवत्याः विवेकः अस्ति वा? द्विशतं रूप्यकाणि एतावता एव हस्तच्युतानि। पुनरपि शतं रूप्यकाणि दातव्यानि इति वदति खलु?" इति।

"धनविषये भवतः चिन्ता मास्तु। ततः धनं कथं प्रतिस्वीकरणीयम् इति अहं जानामि। मया यथा सूचितं तथा कृत्वा गच्छतु भवान्" इति सूचितवती वीणावती।

महेशः जनार्दनस्य हस्ते शतं रूप्यकाणि स्थापयित्वा पत्न्या यथा सूचितं तथा उक्त्वा ग्रामान्तरं गतवान्।

अनन्तरदिने जनार्दनः आगत्य वीणावतीं पृष्टवान्— "भगिनि! विपणितः किमपि आनेतव्यं वा?" इति।

"आनेतव्यं किमपि नास्ति। अन्यविधं साहाय्यम् अपेक्षितम्। मम अनुजस्य अध्ययनार्थं पितुः समीपे धनं नास्ति। अतः मम मात्रा दत्तं सुवर्णवलयं विक्रेतुम् इच्छामि। किन्तु एषा विक्रयणवार्ता मम पत्या न ज्ञायेत" इति उक्तवती वीणावती।

सुवर्णविक्रयणवार्तां श्रुत्वा जनार्दनः सन्तोषेण उक्तवान्— "एतावदेव खलु? अवश्यं करोमि। सुवर्णवलयं ददातु अत्र" इति।

वीणावती क्षणकालानन्तरम् आतङ्केन उक्तवती— "भ्रातः! अद्य शुक्रवासरः खलु? मातृगृहे दत्तम् आभरणं शुक्रवासरे विक्रेतुं न इच्छामि अहम्। किन्तु मम पित्रा अद्यैव त्रिशतं रूप्यकाणि अपेक्ष्यन्ते। यतः अनुजस्य शालायां शुल्कं दातुम् अद्यैव अन्तिमः दिनाङ्कः। अतः किं करणीयम् इत्येव न ज्ञायते" इति।

"तदर्थं किमर्थं चिन्तां करोति? मया पूर्वतनं द्विशतं दातव्यम् आसीत् एव। ह्यः भवत्याः पत्या शतं रूप्यकाणि दत्तानि। अतः

त्रिशतं रूप्यकाणि भवत्यै दास्यामि। भवती तत् पितुः गृहं प्रति प्रेषयतु। श्वः वलयस्य वेक्रयणं कर्तुं शक्यते" इति उक्तवान् जनार्दनः।

"अस्तु तर्हि" इति अङ्गीकृतवती वीणावती। जनार्दनः गृहं गत्वा त्रिशतं रूप्यकाणि आनीय वीणावत्यै दत्तवान्।

अनन्तरदिने यदा सः सुवर्णवलयं प्राप्तुं वीणावत्याः गृहम् आगतवान् तदा सा दिग्भ्रान्ता इव उपविष्टा आसीत्।

जनार्दनं दृष्ट्वा सा– "हा हन्त! अग्रज! सर्वनाशः सम्पन्नः। रात्रौ द्वौ चोरौ आगत्य सर्वं चोरयित्वा गतवन्तौ। धनम्, आभरणानि, पात्राणि इत्यादीनि सर्वाणि नष्टानि। कश्चित् मां स्नानगृहे पातयित्वा द्वारपिधानं कृतवान्। तयोः निर्गमनानन्तरं अहं कथञ्चित् ततः बहिः आगता। इतः परम् अग्रिममासस्य वेतनं मम पतिः यावत् न प्राप्स्यति तावत् आवयोः रक्षणभारः भवतः एव" इति रुदती उक्तवती।

एतत् श्रुत्वा म्लानवदनः जनार्दनः– "हा हान्त! मम तु अन्यत् कष्टम्। मम मातुलानी तीव्रम् अस्वस्था इति ह्यः वार्ता आगता। वृद्धायाः तस्याः सेवार्थं मया मम पत्न्या च गन्तव्यम् एव। यावत् आवयोः प्रत्यागमनं भवेत् तावत् कथञ्चित् निर्वहतु भोः" इति उक्त्वा वीणायाः प्रतिक्रियाम् अपि अपश्यन् ततः निर्गतवान्।

एतदनन्तरं मासः अतीतः चेदपि जनार्दनः जानकी वा महेशस्य गृहं न आगतवन्तौ। विपण्यां महेशं दृष्ट्वा अपि अपश्यन् इव गच्छति जनार्दनः।

"समीचीनम् उपायं कृतवती भवती। महती पीडा अपगता" इति पत्नीं साभिमानं पश्यन् उक्तवान् महेशः।

"एतादृशाः दुष्टाः जनाः एवम् एव निवारणीयाः। शठं प्रति शाठ्यम् एव औषधम्। दाक्षिण्यं सङ्कोचः वा स्वजने स्यात्, न तु एतादृशे जने" इति हसन्ती उक्तवती वीणावती।





# आणकात् ऐश्वर्यम्

रूपराजः नाम कश्चन कर्मकरः कस्यचित् धनिकस्य गृहे उद्योगे आसीत्। तस्य धनिकस्य गोष्ठस्य एकस्मिन् पार्श्वे एव एतस्य वसतिः। लघुकुटीरं निर्माय पत्नीपुत्रैः सह निवसति सः।

कदाचित् रूपराजस्य पत्नी खेदेन पतिम् उक्तवती– "कीदृशी दुर्गतिः अस्माकम्! न पूर्णोदरं भोजनं, न सुखं, न शान्तिः। अस्माकं पुत्राः अग्रे किं वा कुर्युः?" इति।

तदा रूपराजः– "किं करोमि अहम्? वाणिज्यादिकं किमपि कृतं चेत् धनं सम्पादितं स्यात्। किन्तु वाणिज्यार्थं मूलधनम् आवश्यकम्। मूलधनं किम्, एकं नाणकम् अपि नास्ति अस्माकं समीपे। यदि आणकात्मकं मूलधनं स्यात् चेदपि अहं बहुधनं सम्पादयेयम्। हुँ, उत्पद्यन्ते विलीयन्ते दरिद्राणां मनोरथाः" इति निराशया उक्तवान्।

पतिपत्न्योः एतत् सम्भाषणं धनिकः अकस्मात् श्रुतवान्। 'एषः कर्मकरः आणकमितेन मूलधनेन कीदृशं वाणिज्यं कुर्यात्? ततः कियन्तं लाभं सम्पादयेत्? एतत्सर्वं परीक्षणीयम्' इति आलोच्य सः धनिकः एकम् आणकनाणकं कुटीरस्य अन्तः पातितवान्।

अनन्तरदिने सम्मार्जनसमये रूपराजस्य पत्न्या तत् नाणकं प्राप्तम्। सा तत् पत्यै प्रदर्शयन्ती– "आणकं यदि स्यात् तर्हि वाणिज्यं कुर्याम् इति ह्यः उक्तवान् खलु? पश्यतु, अत्र प्राप्तम् आणकम्" इति वदन्ती नाणकं पत्युः हस्ते स्थापितवती।

रूपराजः तत् नाणकं स्वीकृत्य यजमानसमीपं गत्वा– "श्रीमन्! एतत् नाणकं सम्मार्जनसमये मम गृहे प्राप्तम्।

एतत् न मम। भवदीयम् एव स्यात्। अतः स्वीकरोतु'' इति उक्तवान्।

धनिकः तत् नाणकं परीक्ष्य उक्तवान्– ''एतत् ममापि न स्यात्। कथञ्चित् भवता प्राप्तम्। अतः भवान् एव स्वीकरोतु'' इति।

''यथा भवान् वदति तथा'' इति वदन् रूपराजः तत् नाणकं स्वीकृतवान्। तद्दिने एव नगरं गतवान् सः। नगरे अल्पप्रमाणेन कुसीदवाणिज्यं कुर्वतः परिचितस्य कस्यचित् समीपं गत्वा रूपराजः उक्तवान्– ''श्रीमन्! एतत् आणकं वृद्धिरूपेण इदानीम् एव स्वीकृत्य एकं रूप्यकं ऋणरूपेण ददातु। सायङ्कालाभ्यन्तरे ऋणं प्रत्यर्पयिष्यामि'' इति। कुसीदवणिक् हसन् ऋणं दत्तवान्।

रूपराजः अपरस्य कुसीदवणिजः समीपं गत्वा एकं रूप्यकं वृद्धिरूपेण दत्त्वा एकदिनस्य अवधिं निश्चित्य दश रूप्यकाणि ऋणरूपेण प्राप्तवान्।

तानि दश रूप्यकाणि वृद्धिरूपेण अन्यस्मै कुसीदवणिजे दत्त्वा ऋणपत्रम् अपि लिखित्वा दत्त्वा शतं रूप्यकाणि ऋणरूपेण प्राप्तवान्।

एवं क्रमेण ये ऋणं दत्तवन्तः ते सर्वे धनिकस्य परिचिताः एव। एतस्मात् परिचयबलात् एव तैः ऋणं दत्तम् आसीत्।

रूपराजः ऋणरूपेण प्राप्तं शतं रूप्यकाणि स्वीकृत्य अपरस्य महाकुसीदवणिजः समीपं गत्वा तत् धनं वृद्धिरूपेण दत्त्वा– ''एतत् धनं स्वीकृत्य सहस्रं रूप्यकाणि ऋणरूपेण ददातु।



सप्ताहाभ्यन्तरे प्रत्यर्पयिष्यामि'' इति उक्तवान्। सः कुसीदवणिक् रूपराजस्य नाम, तस्य यजमानस्य च नाम इत्यादिकं विवरणं पृष्ट्वा, ऋणपत्रं लेखयित्वा सहस्रं रूप्यकाणि दत्तवान्।

एतेन धनेन रूपराजः पूर्वतनानि ऋणानि प्रत्यर्पितवान्। अनन्तरम् अवशिष्टं धनं पत्न्यै प्रदर्शयन् पत्नीम् उक्तवान्– ''पश्यतु भोः, एकस्मात् आणकतः एतावत् धनं प्राप्तम्'' इति।

''किम् एतेन? एतत् तु ऋणं, न तु लाभः। एतादृशेन धनेन किम्?'' इति असन्तोषेण उक्तवती तस्य पत्नी।

''एतत् ऋणरूपेण प्राप्तं, सत्यम्। एतेन धनेन अहं वाणिज्यं करिष्यामि। ततः लाभः।

आणकात् एव एतावत् प्राप्तं खलु?'' इति उक्तवान् रूपराजः।

अनन्तरदिने रूपराजः कान्तिपुरनामकं ग्रामं गतवान्। तत्र यावानलस्य कृषिः प्रधाना। यावानलसस्यं कर्तनार्थं सिद्धम् अस्ति। तावता तत्र गतः रूपराजः सर्वान् कृषिकान् दृष्ट्वा— ''एतस्य वर्षस्य उत्पत्तिम् अहं क्रेष्यामि। अतः इदानीम् एव अग्रिमधनं किञ्चित् स्वीकुर्वन्तु। मम अनुमतिं विना कस्मैचित् अपि धान्यं न दातव्यम्'' इति उक्त्वा एकैकस्मै अपि कृषिकाय किञ्चित् धनं दत्तवान्। वाणिज्यनियमाः पत्रे लेखिताः।

रूपराजस्य प्रत्यागमनानन्तरम् इतरे वणिजः यावानलं क्रेतुं कान्तिपुरं गतवन्तः। तत्र तैः ज्ञातं यत् धान्यं पूर्वम् एव रूपराजेन अग्रिमधनं दत्त्वा क्रीतम् इति।

ते रूपराजस्य समीपं गत्वा उक्तवन्तः— ''वयं प्रतिवर्षं कान्तिपुरीयं यावानलं क्रीणन्तः स्मः। अस्मिन् वर्षे भवान् आगत्य अस्माकं वाणिज्यं नाशितवान्। वयं प्रार्थयामः — कृपया भवान् अन्यत्र गत्वा वाणिज्यं करोतु इति'' इति।

''भवतां वाणिज्यं मया न नाशितम्। अन्यस्मै विक्रेतुम् एव मया तत्रत्यानि धान्यानि क्रीतानि। भवन्तः वाणिज्यधर्मं जानन्ति एव। यावानलस्य क्रयणमूल्यम् अपि जानन्ति। न्याययुतं लाभांशं मह्यं दत्त्वा मत्तः क्रेतुम् अर्हन्ति भवन्तः'' इति उक्तवान् रूपराजः।

अनन्यगतिकाः वणिजः योग्येन मूल्येन रूपराजतः यावानलधान्यं क्रीतवन्तः। एतेन व्यवहारेण रूपराजेन सहस्रशः रूप्यकाणि प्राप्तानि। सः प्रथमं ऋणं प्रत्यर्पितवान्। शिष्टेन धनेन उत्तमां भूमिं क्रीतवान्। तत्रैव लघुगृहम् अपि निर्मितवान्।

रूपराजस्य एतं व्यवहारकौशलं दृष्ट्वा धनिकः अतीव सन्तुष्टः। ये पूर्वं रूपराजाय अल्पं ऋणं दत्तवन्तः ते अपि रूपराजेन आणकात् सम्पादितम् ऐश्वर्यं दृष्ट्वा आश्चर्यं सन्तोषं च प्रकटितवन्तः।





## वृकः न नरभक्षकः

'वृकेण मानवः भक्षितः' इति घटना एका एव, या च केनडादेशे प्रवृत्ता। व्याधः कश्चित् वृकेण दष्टः, रेबिस्रोगेण ग्रस्तः सन् मृतः च। वस्तुतः तु वृकः न तथा क्रूरः। प्राणिशिशून् वृद्धप्राणिनः, रोगग्रस्तप्राणिनः, विशेषतः शशान् मूषकान् च वृकाः खादन्ति।

## अपूर्वा वर्षोपलवृष्टिः!

१९७० तमे वर्षे अमेरिकादेशे कान्सास् काफे विल्ले प्रदेशे वर्षोपलवृष्टिः जाता। तत्समये १७.५ द्वादशाङ्गुल- परिधियुताः वर्षोपलाः अपि पतिताः।

लण्डन्नगरस्य क्यू गार्डन् इत्यत्र स्थितः 'विक्टोरिया'(निफिसी) जलसस्यम् आकारेण अतिमहत्। जले प्लवमानस्य एतस्य सस्यस्य पत्राणि सामान्यतः षट्द्वादशाङ्गुलमितानि भवन्ति।

## विश्वे एव अद्वितीयं जलसस्यम्



# विपणिं गत्वा आगच्छाव

| | |
|---|---|
| राधा – रेवतिऽऽ रेवतिऽऽ। | Revati! Revati! |
| रेवती – का? राधा वा? आगच्छतु अन्तः। उपविशतु। | Who is it? Radha! Come in, sit down. |
| रा – नैव। उपविशामि चेत् विलम्बः निश्चितः। ... | No, if I sit it will be late. |
| रे – का त्वरा भवत्याः? | Why are you in such a hurry? |
| रा – द्वारम् एवम् एव पिधाय आगतवती। न कीलितवती। अतः त्वरया गन्तव्यम्। विपणिं गत्वा आगच्छाव वा इति प्रष्टुम् अत्र आगता। | I just closed the door and came. Have not locked it. So I should go back soon. Came to find out if we could go to the market. |
| रे – कदा? इदानीम् एव? | When? Right now? |
| रा – अथ किम्? | Why not? |
| रे – तर्हि न शक्यते भोः। पाकः इदानीम् आरब्धः। | Sorry, I can't. Started cooking only just now. |
| रा – शीघ्रं समापयतु। तदनन्तरं गत्वा आगच्छाव। | Finish it soon. Let us go and come back. |
| रे – एकवादने आर्यपुत्रः आगमिष्यति ...। | My husband will be returning by about one O'clock. |
| रा – तावता प्रत्यागन्तुं शक्यते भोः। त्रिचक्रिकया गच्छाव। त्रिचक्रिकया एव प्रत्यागमनम्। | We could be back by then. Let us take an auto. |
| रे – अस्तु तर्हि, एकघण्टानन्तरं प्रस्थानं भवतु। | OK then. We will leave in an hour's time. |
| रा – शीघ्रं पाककार्यं समाप्य सिद्धा भवतु। अहम् अपि अवशिष्टानि गृहकार्याणि समाप्य सज्जीभूय ११.३० वादने अत्रैव आगमिष्यामि। | Finish cooking quickly and get ready. I will complete my other jobs and come back by 11.30. |

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

**विजितां शीर्षिकां जून्-८९ मासे प्रकटयिष्यामः।**





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा एप्रिल्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावुमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'फेब्रवरी'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **नैतत् कार्यं वयोऽनुरूपम्।**

द्वितीयचित्रम् - **अनुरूपं ननु रूपमिदम्।।**

प्रेषकः - श्री वेङ्कटरमणभट्टः, प्र.सं-२१, महाराजसंस्कृतमहाविद्यालयः, मैसूरु-२४,


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ३६-००

**डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्गस्, वडपळनी, मद्रास्-६०००२६**

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु

**चन्दमामा पब्लिकेषन्स्, चन्दमामा बिल्डिङ्गस्, वडपळनी, मद्रास्-६०००२६**

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अगिलत् - Swallowd
अनुपङ्क्तिः - Queue
अर्गलः - Wooden bolt
आणकम् - A six paise coin
आणिः - Nail
उत्कोचः - Bribe
उद्गिरणम् - Belch
उपाविशत् - Sat
करण्डकः - A small box
कवलम् - A morsel of food
कुट्टिमः - A floor paved with tiles
गोष्ठम् - Cattle-shed
घट्टकुटी - Toll-gate
चतुष्पथः - A junction of four roads in a town
चिता - Selected
चिनोतु - Select
दंष्ट्रा - Large tooth
नाणकम् - Coin
निखातवान् - Buried
निर्वाचनम् - Election
प्रच्छयामि - Will encourage to question
प्रासादः - Palace
महिषी - Buffalo
मृच्छदः - Tile
मृत्युपत्रम् - Will and testament
यवागूः - Rice-gruel
यावानलः - Maize
यौतकम् - Marriage gift given to a woman
वन्ध्या - Barren cow
वर्षोपलः - Hailstone
वातायनम् - Window
विकलाङ्गः - Handicapped
विदारणम् - To tear apart
विरामः - Holiday/recess
वृकः - Wolf
व्यामः - Measure of length
शाद्वलः - Grassland
शुल्कम् - Levy (duty)
सञ्चितम् - Accumulated by saving
सर्वकारः - Government
सुधा - Lime
स्थालिका - Plate

# In your MARCH issue of ...

JUNIOR

Price Rs 5 March 1989 Vol. 1 No. 2

# QUEST

*Where finding out is fun*

The new monthly English children's magazine.

- *How to be a writer*
- *Meet Lorry the loris*
- *Age of the Epics*

★ *Zip thró your exams with our pull-out*

**A Super Bargain for our first subscribers!**

A whole year's JUNIOR QUEST for Rs. 50/- only
Money order/Postal Order/Demand Draft to
M/s DOLTON AGENCIES
CHANDAMAMA BUILDINGS
VADAPALANI, MADRAS 600 026

**RUSH!**
FOR YOUR COPY

